+०२ उदकशान्तिः (पूर्णपाठः)

+०२ उदकशान्तिः ...{Loading}...

## ०१ रेखा-कर्षः ...{Loading}...

अथोदकशान्तिः

गर्भाधानादिषु पूर्वेद्युः
"उदकशान्ति-जप-कर्म करिष्य" इति सङ्कल्प्य
गोमयेन चतुर्-अश्रम् उपलिप्य

प्राचीः
तत्र 'ब्रह्मजज्ञानम्' इति मध्ये,
'नाके सुपर्णम्' इति दक्षिणतः,
'आप्यायस्वे'त्य् उत्तरतः
प्राचीस् तिस्रो रेखाः

ब्रह्म॑ (=मन्त्रः ([सौरमण्डलयज्ञे])) जज्ञा॒नं (=उत्पन्नम्) प्र॑थ॒मं पु॒रस्ता॑द्
वि सी॑म॒तस् सु॒रुचो॑ वे॒न आ॑वः ।
स बु॒ध्नि॑या॑ (=मूले भवः ([खस्य सूर्यः])) उ॒प॒मा अ॑स्य वि॒ष्ठाः (=विस्थितः),
स॒तश्च॒ योनि॑म् (सूर्यम्) अस॑तश्च॒ विवः॑ (=विवृतवान्) ।

नाके॑ सु॒प॒र्णम् (→सूर्यं) उ॒प यत् पत॑न्तं
हृ॒दा **वेन॑न्तो अ॒भ्यच॑क्षत** त्वा ।
हिर॑ण्य-प॒क्षं (शतभिषक्-स्थ-)वरु॑णस्य दू॒तं
य॒मस्य॒ योनौ॑ (→भरण्यां) श॒कु॒नं भु॑र॒ण्युम्(←भृ) ॥

आ प्या॑यस्व मदिन्तम
सोम॒ विश्वे॑भिर् अं॒शुभिः॑ ।
भवा॑ नः सु॒श्रव॑स्तमः॒ सखा॑ वृ॒धे ॥

उदीचीः
'यो रुद्रो अग्नौ' इति मध्ये,
'इदं विष्णु'रिति पश्चात्,
'इन्द्रं विश्वा अवीवृधन्' इति पुरस्ताद्
उदीचीः तिस्रो रेखा विलिख्य

यो रु॒द्रो अ॒ग्नौ , यो अ॒प्सु ,
य ओष॑धीषु, यो रु॒द्रो
विश्वा॒ भुव॑ना **वि॒वेश॒**
तस्मै॑ रु॒द्राय॒ **नमो॑ अस्तु** ।

इ॒दं॒ विष्णु॒र् (अग्नि-विद्युत्-सूर्यात्मना) **वि च॑क्रमे**
(पृथिव्याम् अन्तरिक्षे दिवि च) त्रे॒धा **नि द॑धे** प॒दम् ।
(तैर् आधारैर् जगत्) **सम् ऊ॑ढम्** अस्य पा॒ꣳसु॒रे (ले इति साम्नि, पांसुमति [पादे]) ॥

इन्द्रं॒ विश्वा॑ **अवीवृधन्**
स॒मु॒द्र(वत्)-व्य॑चसं॒ गिरः॑ ।
र॒थीत॑मं र॒थीनां॑,
वाजा॑नां॒ सत्-प॑तिं॒ पति॑म् ॥

## ०२ कुम्भः ...{Loading}...

अद्भिर् **अवोक्ष्य**
व्रीहीन् तत्र **निक्षिप्य**

तत्र 'ब्रह्मजज्ञानम्' इति कुम्भं **निधाय**

ब्रह्म॑ (=मन्त्रः ([सौरमण्डलयज्ञे])) जज्ञा॒नं (=उत्पन्नम्) प्र॑थ॒मं पु॒रस्ता॑द्
वि सी॑म॒तस् सु॒रुचो॑ वे॒न आ॑वः ।
स बु॒ध्नि॑या॑ (=मूले भवः ([खस्य सूर्यः])) उ॒प॒मा अ॑स्य वि॒ष्ठाः (=विस्थितः),
स॒तश्च॒ योनि॑म् (सूर्यम्) अस॑तश्च॒ विवः॑ (=विवृतवान्) ।

तस्मिन् गायत्र्या तिरः-पवित्रं **निधाय**

तत् स॑वि॒तुर् वरे॑ण्य(णिय)म्
भर्गो॑(=भर्जनम्) दे॒वस्य॑ धीमहि(←धा धारणे/ ध्यै ध्याने / धी आराधने) ।
धियो॒ यो नः॑ प्रचो॒दया॑त् ॥
(प॒रो-र॑जसे॒ ऽसाव॒द् ओ३म् ॥)

'आपो वा इदं सर्वम्' इत्यद्भिरापूर्य ऊर्ध्वाग्रं कूर्चं निधाय

आपो॒ वा इ॒दꣳ सर्वं॑
विश्वा॑ भू॒तान्य् आपः॑
प्रा॒णा वा आपः॑
प॒शव॒ आपो, ऽन्न॒म् आपो, ऽमृ॑त॒म् आपः॑
स॒म्राड् आपो॑, वि॒राड् आपः॑, स्व॒राड् आप॒श्
छन्दा॒ꣳस्य् आपो, ज्योती॒ꣳष्य् आपो॑, यजू॒ꣳष्य् आप॑स्,
स॒त्यम् आप॒स्, सर्वा॑ दे॒वता॒ आपो॑,
भूर् भुव॒स् सुव॒र् आप॒
ॐ ॥

'भूर् भुवस् सुवर् ओम्' इति **अक्षतां** निक्षिप्य

गन्ध-पुष्पैर् **अलङ्-कृत्य**

दूर्वा-पुष्प-फलैर् **अवकीर्य**

दूर्वा-दर्भैः **प्रच्छाद्य**

'शन्नो देवी'र् इत्य् **अभिमृश्य**

शं नो॑ दे॒वीर॒भिष्ट॑य
आपो॑ भवन्तु पी॒तये॑ ।
शं योर्(=[अ]मिश्रणाय) अ॒भि स्र॑वन्तु नः ॥ ०४॥

चतुर्-दिक्षु आसनेषु निषण्णैश् चतुर्भिर् ब्राह्मणैस् सह
कुम्भम् **अन्वारभ्य**

## +०३ जपः (पूर्णपाठः) ...{Loading}...

+०३ जपः ...{Loading}...

गायत्रीं पच्छो ऽर्धर्चशो ऽनवानम् उक्त्वा

व्याहृतीर् विहृताः - पादादिष्व् अन्तेषु वा, तथार्धर्चयोर्, उत्तमां कृत्स्नायाम् ११

(आद्युच्चारणपक्षे)

पादशः

ओं भूस् तत् सवितुर् वरेण्य(णिय)म्।
ओं भुवर् (पापादि)भर्गो(=भर्जनम्) देवस्य धीमहि(←ध्यै ध्याने / धी आराधने) ।
ओं सुवर् धियो यो नः प्रचोदयात् ॥

अर्धशः पूर्णश्च

ओं भूस् तत् सवितुर् वरेण्य(णिय)म् (पापादि)भर्गो(=भर्जनम्) देवस्य
धीमहि(←ध्यै ध्याने / धी आराधने) ।
ओं भुवर् धियो यो नः प्रचोदयात् ॥

ओं सुवस्

---

तत् सवितुर् वरेण्य(णिय)म्
भर्गो(=भर्जनम्) देवस्य धीमहि(←धा धारणे/ ध्यै ध्याने / धी आराधने) ।
धियो यो नः प्रचोदयात् ॥
(परो-रजसे ऽसावद् ओ३म् ॥)

---

पुनः पूर्णोच्यते कैश्चित्

ॐ भूर्-भुवस्-सुवस्

---

तत् सवितुर् वरेण्य(णिय)म्
भर्गो(=भर्जनम्) देवस्य धीमहि(←धा धारणे/ ध्यै ध्याने / धी आराधने) ।
धियो यो नः प्रचोदयात् ॥
(परो-रजसे ऽसावद् ओ३म् ॥)

---

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

इषे त्वा। उर्जे त्वा। वायवस्थोपायवस्थ। देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥

---

अग्न आ याहि वीतये (=हविर्भक्षणाय)
गृणानो (=स्तूयमानः) हव्यदातये (देवेभ्यः) ।
नि होता सत्सि बर्हिषि ।।

---

शं नो देवीरभिष्टय
आपो भवन्तु पीतये ।
शं योर्(=[अ]मिश्रणाय) अभि स्रवन्तु नः ॥ ०४॥

---

'मदेचिदस्य' इत्यर्धर्चम् अपोह्य,

परिचयः

- सायणः /- तैत्तिरीयभाष्ये ऽत्र। ऋग्भाष्ये ऽत्र।
- तत्रैव 'मदे चिदस्य ' इत्यर्धर्चम् एवोद्धृत्य। तैत्तिरीयभाष्ये ऽत्र।

आह्वानम्

कृणुष्व पाजः (=तेजः) प्रसितिन् (=जालं) न पृथ्वीं
याहि राजेवामवाꣳ (=सहवान्) इभेन ।
तृष्वीम् (=वेगम्) अनु प्रसितिं (=सैन्यं) द्रूणानो
ऽस्ताऽसि विध्य रक्षसस् तपिष्ठैः ॥

युद्धप्रार्थना

तव भ्रमास आशुया पतन्त्य् अनु
स्पृश धृषता (=अभिभवता) शोशुचानः ।
तपूꣳष्य् अग्ने जुह्वा पतङ्गान्
असन्दितो (=अनिरुद्धः) वि सृज विष्वग् उल्काः ॥

---

प्रति स्पशो वि सृज तूर्णितमो
भवा पायुर् विशो अस्या अदब्धः ।
यो नो दूरे अघशꣳसो यो अन्त्य् अग्ने
माकिष्टे व्यथिर् (=बाधकः) आदधर्षीत् ॥

---

उद् अग्ने तिष्ठ प्रत्याऽऽतनुष्व
न्य् अमित्राꣳ ओषतात् (=प्रदह) तिग्म-हेते ।
यो नो अरातिꣳ समिधान चक्रे
नीचा तं धक्ष्य् (=दह) अतसं (=काष्ठविशेषः) न शुष्कम् ॥

---

ऊर्ध्वो भव प्रति विध्या-
+ध्य् अस्मद् आविष् कृणुष्व दैव्यान्य् अग्ने ।
अव स्थिरा तनुहि यातु-जूनां(=प्रेरकाणां)
जामिम् (=ज्ञातिं) अजामिं प्र मृणीहि (=जहि) शत्रून् ॥

उपासकसौभाग्यम्

स ते जानाति सुमतिं यविष्ठ
य ईवते(=गमनशीलाय) ब्रह्मणे (=पुष्टाय) गातुम् ऐरत् (=प्रेरयति) ।
विश्वान्य् अस्मै सुदिनानि रायो
द्युम्नान्य् अर्यो वि दुरो (=गृहान्) अभि द्यौत् (=द्योतस्व) ॥

---

सेद(=स+इत्) अग्ने अस्तु सुभगस् सुदानुर्
यस् त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति, स्व आयुषि दुरोणे (=गृहे) (तिष्ठतु)
विश्वेद् अस्मै सुदिना सा ऽसद्(=भूयात्) इष्टिः ॥

प्रतिज्ञा

अर्चामि ते सुमतिं, घोष्य् (=घोषवती) अर्वाक्(=पुरतः)
सम्+ ते वावाता(=पुनः पुनः) जरताम् (=स्तौतु) इयं गीः ।
स्वश्वास् त्वा सुरथा मर्जयेमा(=अलङ्कुर्याम)
ऽस्मे(=अस्मासु) क्षत्राणि धारयेर् अनु द्यून् (=अन्वहम्) ॥

---

इह त्वा भूर्या चरेद् उप (आ)त्मन्
दोषावस्तर् (=रात्रावहः) दीदिवाꣳसम् अनु द्यून्(=अन्वहम्) ।
क्रीडन्तस् त्वा सुमनसस् सपेम(=परिचरेमा)
+अभि द्युम्ना तस्थिवाꣳसो जनानाम् ॥

---

यस् त्वा स्व-अश्वस् सुहिरण्यो अग्न
उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा
यस् त आतिथ्यम् आनुषग् (=अनुक्रमेण) जुजोषत् ॥

---

महो (=महद्राक्षसान्) रुजामि (=भनज्मि) बन्धुता(~बन्धुतया)
वचोभिस् तन् मा पितुर् गोतमाद् अन्वियाय ।
त्वन् नो अस्य वचसश् चिकिद्धि
होतर् यविष्ठ सुक्रतो दमूनाः (=दान्तमनाः)॥

किरणकीर्तिः

अस्वप्नजस् तरणयस् सुशेवा (=सुमुखाः)
अतन्द्रासो ऽवृका(=अहिंसका) अश्रमिष्ठाः ।
ते (रश्मयः) पायवस् सध्रियञ्चो (=सङ्गताः)
निषद्या(=उपविश्य)ऽग्ने तव नः पान्त्व् अमूर (=अमर्त्य) ॥

(उतथ्यभार्या ममता। तस्याम् बृहस्पतिर् रेतः स्थापयितुम् अयतत। तत्र वर्तमानं रेतोऽन्तरम् आक्षिपत्। बृहस्पतिर् अशपत् तम् दीर्घतमा भवेति। सोऽ अग्नेर् अलभत चक्षुः।)

ये पा॒यवो॑ मामते॒यन् ते॑ अग्ने॒
पश्य॑न्तो अ॒न्धन् दु॑रि॒ताद् अर॑क्षन् ।
र॒रक्ष॒ तान्त् सु॒कृतो॑ वि॒श्ववे॑दा॒
दिप्स॑न्त॒ (दम्भितुकामाः) इद् रि॒पवो॒ ना ह॑ देभुः (=परिभवन्ति) ॥

प्रतिज्ञानुवर्तनम्

त्वया॑ व॒यꣳ स॑ध॒न्यं॑स् त्वोता॑स् (त्वया +अविताः=रक्षिताः)
तव॒ प्रणी॑त्याऽश्याम॒ वाजा॑न् (=अन्नानि) ।
उ॒भा (पाप)शꣳसा॑ (शत्रू) सू॒दय सत्यताते
ऽनुष्ठु॒या कृ॑णुह्य॒ अह्र॒याण (=अह्रीः) ॥

अ॒या (=अनया) ते॑ अग्ने स॒मिधा॑ विधेम॒
प्रति॒ स्तोमꣳ॑ श॒स्यमा॑नं गृभाय (=गृहाण) ।
दहा॒ ऽशसो॑ (=अशंसो) र॒क्षसः॑ पा॒ह्य॑स्मान्
द्रु॒हो नि॒दो (=निन्दकात्) मि॑त्रमहो (=मित्रपूज्य!) अव॒द्यात्(=परिवादात्) ॥

र॒क्षो॒हणं॑ वा॒जिन॒म् (=अन्नवन्तम्) आऽऽजि॑घर्मि (=दीपयामि)
मि॒त्रं प्रथि॑ष्ठ॒म् (=विस्तीर्णतमम्) उप॑यामि॒ शर्म॑ ।
शिशा॑नो (=तीक्ष्णः) अ॒ग्निः क्रतु॑भि॒स् समि॑द्ध॒स्
स नो॒ दिवा॒ स रि॒षः (=हिंसकात्) पा॑तु॒ नक्त॑म् ॥

रक्षोहाग्निध्यानम्

वि ज्योति॑षा बृह॒ता **भा॑त्य्** अ॒ग्निर्
आ॒विर् विश्वा॑नि **कृणुते** महि॒त्वा (=महत्तया) ।
प्रादे॑वीर् मा॒यास् **सहते** दु॒रेवाः॑ (=दुरत्ययः)
**शिशी॑ते** (=तीक्ष्णीकरोति) शृङ्गे॒ रक्ष॑से वि॒निक्षे॑ (=विनाशाय) ॥

उ॒त स्वा॒नासो॑ (=सस्वनाः) दि॒वि ष॑न्त्व् अ॒ग्नेस्
ति॒ग्मायु॑धा॒ रक्ष॑से॒ हन्त॒ वा उ॑ ।
[(अस्माकं) मदे॑ (=मदाय) चिद॒स्य॒ प्ररु॑जन्ति॒ (=भञ्जन्ति (अदेवीः))
भामा॒(=भासः रश्मयो),
न व॑रन्ते॒ (अस्मान्) परि॒बाधो॒ अदे॑वीः ॥ ]

पशुकामस्यैन्द्रेष्टेः

पुरोनुवाक्या

इन्द्रं॑ वो वि॒श्वत॒स् परि॒
**हवा॑महे** जने॑भ्यः ।
अ॒स्माक॑म् **अस्तु** केव॑लः ॥

याज्या

इन्द्रं॒ नरो॑ ने॒म(=खण्ड)-धि॑ता (→सङ्ग्रामे) हवन्ते (=ह्वयन्ति)
यत् पार्या॒ (←पार, साम्नि भेदः) यु॒नज॑ते (=प्रयुज्यन्ते) धिय॒स् ताः ।
शूरो॒ नृ-षा॑ता (=सम्भक्ता) शव॑सश् चका॒न (कामयमानः)

(सामवेदे भेदः)
आ गोम॑ति व्र॒जे भ॑जा॒ त्वं नः॑ ।।

इन्द्रियावद्यागे

पुरोनुवाक्या

**इ॒न्द्रि॒याणि॑** शतक्रतो॒
या ते॒ जने॑षु प॒ञ्चसु॑ ।
इन्द्र॒ तानि॑ त॒ **आ वृ॑णे** ॥

याज्या

**अनु॑** ते **दायि**(=दीयते) म॒ह(=महते) इ॑न्द्रि॒याय॑
स॒त्रा(=यज्ञेषु), ते॒ विश्व॒म् **अनु॑** वृत्र-ह॒त्ये॑(=हत्यायै) ।
**अनु॑** क्ष॒त्रम्, **अनु॒** सहो॑ यज॒त्र(=यष्टव्य)

- इन्द्र॑ दे॒वेभि॒र्, **अनु॑** ते नृ-ष॒ह्ये॑ ॥

घर्मवद्यागे

पुरोनुवाक्या

आ य॒स्मिँन्त् (विषुवकाले रोहिण्यां स्थिते पुरा) स॒प्त (कृत्तिकास्थाः अश्वाः?)
**वा॑स॒वास्**
**तिष्ठ॑न्ति** स्व्-आ॒रुहो॑ यथा ।
ऋषि॑र्(→सूर्यः) ह दीर्घ-श्रु॒त्त॑म
इन्द्र॑स्य घ॒र्मो॑(→सूर्यः, प्रवर्ग्यपात्रम्) अति॑थिः ॥

याज्या

(इन्द्र!) आ॒मासु॑(=अपक्कासु) प॒क्वम् **ऐर॑य**(ः)
आ सूर्य॑ं (अ) **रोहयो** दि॒वि (रोहिण्याम् पुरा विषुवकाले, पणिभिर् युद्धा)।
घ॒र्मं(=प्रवर्ग्यपात्रम्, सूर्यम्) न साम॑न् तपता सु॒व्-ऋ॒क्तिभि॒र्(←ऋक् | वृज्)
जुष्ट॑ं गिर्-व॑णसे(=प्रीतये [इन्द्राय]) बृ॒हत् ॥

अर्कवद्-यागे

पुरोनुवाक्या

इन्द्र॒म् इद् गा॒थिनो॑(=गायकाः) बृ॒हद्(साम्ना)
इन्द्र॑म् अ॒र्केभि॑र्(←अर्च्, ऋक्) अ॒र्किणः॑ ।
इन्द्र॒ं वाणी॑र्(→यजूंषि) **अनूषत**(←णु स्तुतौ) ॥

याज्या

**गाय॑न्ति** त्वा गाय॒त्रिणो
**ऽर्च॒न्त्य्** अ॒र्कम् अ॒र्किणः॑(←ऋक्) ।
ब्र॒ह्माण॑स् त्वा शतक्रत॒
उद् व॒ंशम् इ॑व **येमिरे** (←यम्)॥

अंहोमुग्यागे

पुरोनुवाक्या

अꣳहो॒मुचे॒ प्र **भ॑रेमा** मनी॒षाम्
ओषि॑ष्ठ(←ओष दाहे)-दाव्ने॑(=दात्रे) सु॒म॒तिङ् गृ॒णा॒नाः ।
इ॒दम् इ॑न्द्र प्रति॑ ह॒व्यङ् **गृ॑भाय**(←गृह्)
स॒त्यास् **स॑न्तु** यज॑मानस्य॒ कामाः॑ ॥

याज्या

**वि॒वेष॒** यन् मा॑, धि॒षणा॑(=बुद्धिः) **ज॒जान॒**(←जन्)
(यत्) स्तवै॑ पु॒रा पार्या॒द्(=पारभवात्) इन्द्र॒म् अह्नः॑ ।
अꣳह॑सो यत्र॑ **पी॒प॒रद्**(=पारयति) यथा॑ नो
ना॒वेव॒ यान्त॑म् उ॒भये॑ (तीरस्था) **हवन्ते** ॥

याज्या

प्र स॒म्राज॑म्, प्रथ॒मम् अ॑ध्व॒राणा॑म्, [48]
अꣳहो॒मुच॑ँ, वृष॒भय॑ँ य॒ज्ञिया॑नाम् ।
अ॒पान् न॒पात॑म्, अ॒श्विना॒ हय॑न्तम्(←हय गतौ)
अ॒स्मिन् न॑र इन्द्रि॒यन् ध॑त्त॒म् ओजः॑ ॥

वैमृधयागे

पुरोनुवाक्या

वि न॑ इन्द्र॒ मृधो॑(=योद्धॄन्) जहि
नी॒चा य॑च्छ पृतन्य॒तः(←पृतना + क्यच्) ।
अ॒ध॒स्-प॒दन् तम् ई॑ङ् कृधि
यो अ॒स्मा३ँ अ॑भि॒दास॑ति(←दसु उपक्षये) ॥

याज्या

इन्द्र॑ **क्ष॒त्रम्** अ॒भि वा॒मम् ओजो
**ऽजा॑यथा** वृषभ चर्षणी॒नाम् ।
**अपा॑नुदो॒** जन॑म् अमित्र॒यन्त॑म्
उ॒रुं दे॒वेभ्यो॑ **अकृणोरु** लो॒कम् ॥

याज्या

**मृ॒गो** न भी॒मx कु॑च॒रो गि॑रि॒ष्ठा‿
प॑रा॒वतः॑ [49] **आ ज॑गामा॒** पर॑स्याः ।
सृक॑३ँ(←सृ|सृक्) **स॒ꣳशाय॑** प॒विम् इ॑न्द्र ति॒ग्मवँ॑
वि शत्रू॑न् ता॒ढि वि मृधो॑(=योद्धॄन्) **नुदस्व** ॥

याज्या

वि शत्रू॑न् वि मृधो॑ नुद॒
वि वृत्र॒स्य॒ हनू॑ रुज ।
वि म॒न्युम् इ॑न्द्र भामि॒तो॑
ऽमित्र॑स्याभि॒दास॑तः ॥

त्रातृयागे
पुरोनुवाक्या

त्रा॒तार॒म् इन्द्र॑म् अवि॒तार॒म् इन्द्र३ँ॒
हवे॑हवे सु॒हव३ँ॒ शूर॒म् इन्द्र॑म् ।
**हु॒वे** नु श॒क्रम् पु॑रुहू॒तम् इन्द्र३ँ॑
स्व॒स्ति नो॑ म॒घवा॑ **धा॒त्व्** इन्द्रः॑ ॥

याज्या

**मा** ते॑ अ॒स्याम् [50] सहसाव॒न्(←सहः)
परि॑ष्टाव॒(=परितः) अ॒घाय॑ **भू॒म** हरिव‿, परा॒दै॑(=परादातुम्) ।
**त्राय॑स्व** नो ऽवृ॒केभि॑र् वरू॑थैस्(=गृहैः)
तव॑ **प्रि॒यास॑स्** सू॒रिषु॑ **स्याम** ॥

अर्काश्वमेधवद्यागे
पुरोनुवाक्या

अन॑वस् ते **रथ॒म्** अश्वा॑य **तक्ष॒न्**
त्वष्टा॒ **वज्र॑** पुरुहूत द्यु॒मन्त॑म् ।
ब्र॒ह्माण॒ **इन्द्र॑** म॒हय॑न्तो अ॒र्कैर्
**अव॑र्धयन्** अह॑ये॒ हन्त॒वा उ॑ ॥

याज्या

यत॑ इन्द्र॒

विश्वास-प्रस्तुतिः ...{Loading}...

यत॑ इन्द्र भया॑महे॒
ततो॑ नो॒ अभ॑यं कृधि ।
मघ॑वञ् छ॒ग्धि (=शक्तो वर्तस्व) तव॒ तन् न॑(ः) ऊ॒तये॑(=रक्षायै, ऊ॒तिभि॑र् इति शाकले)
वि द्विषो॒ वि मृधो॑(=सङ्ग्रामान्) जहि ।।

०६ ‘स्वस्तिदा’

स्व॒स्ति॒दा वि॒शस्-पति॑र्
वृ॒त्र॒हा वि॑मृ॒धो व॒शी ।
वृषेन्द्रः॑ पु॒र **एं॑तु** नः
सो॒म॒-पा **अ॑भयङ्-क॒रः** ॥

०७ ‘महाँ इन्द्रो वज्रबाहुः’

म॒हा३ँ इन्द्रो॑ व॒ज्र॑बाहुष्
षो॒ड॒शी **शर्म॑ यच्छतु** ।
**स्व॒स्ति** नो॑ म॒घवा॑ **करोतु॒**
**हन्तु॑** पा॒प्मान॒यँ॒ यो॑ऽस्मान् द्वेष्टि॑ ॥

०८ ‘सजोषा’

इति चतसृभिः(=??),

स॒जोषा॑ इन्द्र॒ सग॑णो म॒रुद्भिः॒
**सोम॑ पिब** वृत्र॒हा शू॑र वि॒द्वान् ।
**ज॒हि शत्रूँ॑र्** अप॒ मृधो॑ नु॒दस्व
+**अथाभ॑यं कृणुहि** वि॒श्वतो॑ नः ॥

ये दे॒वा‿ पु॑र॒स्-सदो॒ऽग्नि-नेत्राः॑ [रक्षो॒-हण॒स्,
ते न‿ पान्तु॒,
ते नो॑ऽवन्तु॒,
तेभ्यो॑ नम॒स्,
तेभ्य॒स् स्वाहा॑ ]

[ये दे॒वाः] दक्षिण॒-सदो॑ य॒म-नेत्राः [रक्षो॒-हण॒स्,
ते न‿ पान्तु॒,
ते नो॑ऽवन्तु॒,
तेभ्यो॑ नम॒स्,
तेभ्य॒स् स्वाहा॑ ]

[ये दे॒वाः] पश्चा॒थ्-सद॑स् सवि॒तृ-नेत्राः [रक्षो॒-हण॒स्,
ते न‿ पान्तु॒,
ते नो॑ऽवन्तु॒,
तेभ्यो॑ नम॒स्,
तेभ्य॒स् स्वाहा॑ ]

[ये दे॒वाः] उत्त॒र-सदो॒ वरु॑ण-नेत्राः [रक्षो॒-हण॒स्,
ते न‿ पान्तु॒,
ते नो॑ऽवन्तु॒,
तेभ्यो॑ नम॒स्,
तेभ्य॒स् स्वाहा॑ ]

[ये दे॒वाः] उपरि॒-षदो॒ बृह॒स्-पति॑-नेत्राः रक्षो॒-हण॒स्,
ते न‿ पान्तु॒,
ते नो॑ऽवन्तु॒,
तेभ्यो॑ नम॒स्,
तेभ्य॒स् स्वाहा॑ ॥

अ॒ग्नये॑ रक्षो॒घ्ने स्वाहा॑ ।
य॒माय॑ [रक्षो॒घ्ने स्वाहा॑] ।

स॒वि॒त्रे [रख्षो॒घ्ने स्वाहा॑] ।
वरु॑णाय [रख्षो॒घ्ने स्वाहा॑] ।
बृह॒स्पत॑ये [रख्षो॒घ्ने स्वाहा॑] ।
दुव॑स्वते रख्षो॒घ्ने स्वाहा॓ ।

---

(हे यजमान)
अ॒ग्निरायु॑ष्मा॒न् ,
स वन॒स्पति॑भि॒रायु॑ष्मा॒न् ,
तेन॒ त्वायु॒षायु॑ष्मन्तङ्करोमि ।

सोम॒ आयु॑ष्मा॒न् स ओष॑धीभि॒र् [आयु॑ष्मा॒न् तेन॒ त्वायु॒षा ऽऽयु॑ष्मन्तङ् करोमि ।]

(हे यजमान)य॒ज्ञ, स दख्षि॑णाभि॒र् आयु॑ष्मा॒न्, [तेन॒ त्वायु॒षा ऽऽयु॑ष्मन्तङ् करोमि ।]

(हे यजमान)ब्र॒ह्मायु॑ष्म॒त्, तद्ब्रा॓ह्म॒णैरायु॑ष्मत् , [तेन॒ त्वायु॒षा ऽऽयु॑ष्मन्तङ् करोमि ।]

(हे यजमान)दे॒वा आयु॑ष्मन्तः।
ते॑ऽमृते॑न [आयु॑ष्मन्तः] [तेन॒ त्वायु॒षा ऽऽयु॑ष्मन्तङ् करोमि ।]

पि॒तर॒ आयु॑ष्मन्तः, ते स्व॒धया ऽऽयु॑ष्मन्त॒ः,
तेन॒ त्वायु॒षायु॑ष्मन्तङ्करोमि ॥

---

यावामिन्द्रावरुणे’ति चतुरः, ‘यो वामिन्द्रावरुणा’ इत्यष्टौ पर्यायान्,

[[3]]

---

या वा॒म् इन्द्रा-वरुणा यत॒व्या॑ त॒नूस्
तये॒मम् अꣳह॑सो मुञ्चतम् ।

---

या वा॒म् इन्द्रावरुणा
सह॒स्या॑ [त॒नूस्तये॒म् अमꣳह॑सो मुञ्चतम्] ।

---

[या वा॑मिन्द्रावरुणा] रख्ष॒स्या॑ [त॒नूस्॒ तये॒मम् अꣳह॑सो मुञ्चतम्] ।

---

[या वा॑मिन्द्रावरुणा] तेज॒स्या॑ त॒नूस्॒ तये॒मम् अꣳह॑सो मुञ्चतम् ।

---

यो वा॒म् इन्द्रा-वरुणाव् अ॒ग्नौ स्रा॒म॒स्
तव॒ँ वा॒म् ए॒तेनाव॑यजे ।

---

यो वा॒म् इन्द्रा-वरुणा द्वि॒पाथ्सु॒ प॒शुषु॒ [स्रा॒म॒स् तव॒ँ वा॒म् ए॒तेनाव॑ यजे ।]

---

[यो वा॒म् इन्द्रा-वरुणा] चतु॑ष्पाथ्सु॒ प॒शुषु॒ [स्रा॒म॒स् तव॒ँ वा॒म् ए॒तेनाव॑ यजे ।]

---

[यो वा॒म् इन्द्रा-वरुणा] गो॒ष्ठे [स्रा॒म॒स् तव॒ँ वा॒म् ए॒तेनाव॑ यजे ।]

---

[यो वा॒म् इन्द्रा-वरुणा] गृ॒हेषु॒ [स्रा॒म॒स् तव॒ँ वा॒म् ए॒तेनाव॑ यजे ।]

---

[यो वा॒म् इन्द्रा-वरुणाव्] अ॒प्सु॒ [स्रा॒म॒स् तव॒ँ वा॒म् ए॒तेनाव॑ यजे ।]

---

[यो वा॒म् इन्द्रा-वरुणाव्] ओष॑धीषु॒ [स्रा॒म॒स् तव॒ँ वा॒म् ए॒तेनाव॑ यजे ।]।

---

[यो वा॒म् इन्द्रा-वरुणा] वन॒स्पति॑षु॒ स्रा॒म॒स् तव॒ँ वा॒म् ए॒तेनाव॑ यजे ।

---

अग्ने॑ यश॒स्वि॒न् यश॑से॒मम् (यजमानं) **अर्प॒य**
+इन्द्रा॑वती॒म् अप॑चिती॒म्(=पूजां) **इ॒हाव॑ह** । अ॒यम् मू॒र्धा प॑रमे॒ष्ठी सु॒वर्चा॓ः,
स॒मा॒नाना॑म् **उत्त॒मश्लो॑को अस्तु॒** ।

---

भ॒द्रम् **पश्य॑न्त॒ उप॑ से॒दु॒र्** अग्रे
तपो॑ (उपसल्-लक्षणां) दी॒ख्षाम् ऋष॑यस् सु॒व॒र्-विदः॑ ।
तत॑ः ख्ष॒त्रम् ब॒लम् ओज॑श् च **जा॒तन्**
तद् अ॒स्मै दे॒वा **अ॒भि स॒न्नम॑न्तु** ।

---

धा॒ता वि॑धा॒ता प॑र॒मोत स॒न्दृक्
प्र॒जाप॑तिः॒ परमे॒ष्ठी वि॒राजा॓ ।
स्तोमा॒श् छन्दा॒ꣳसि नि॒विदो॑ म **आहु॒र्**
ए॒तस्मै॓ रा॒ष्ट्रम् **अ॒भि स॒न्नमा॑म** ।

---

**अ॒भ्याव॑र्तध्व॒म्** उप॒ मेत॑ सा॒कम्
अ॒यꣳ शा॒स्ता ऽधि॑पतिर् वो **अस्तु** ।
अ॒स्य वि॒ज्ञान॒म् **अनु॒ सꣳ र॑भध्व॒म्**
इ॒मम् प॒श्चाद् **अनु॑ जीवा॒थ** सर्वे॓ ।

---

अत्रापि कश्चिद् विशेषः बोधायनीये दृश्यते,

> ऋ॒ता॒षाडृ॒तधा॑मा॒ऽग्निर्ग॑न्ध॒र्वस्
> स इ॒दम्ब्रह्म॑ ख्ष॒त्रम्पा॑तु॒
> तस्मै॑ स्वाहा॒
>
> तस्यौष॑धयोऽप्स॒रस॒ ऊर्जो॒ नाम॒ ता इ॒दम्ब्रह्म॑ ख्ष॒त्रम्पा॓न्तु॒
> ताभ्य॒स्स्वाहा॑

इति पुंलिङ्गपदानि पुंलिङ्गपदेन,
स्त्रीलिङ्गपदानि स्त्रीलिङ्गपदेन च संयोज्य कथयितव्याः
आहत्य द्वाविंशतिर्मन्त्राः ।

---

तद्-अनुवाकस्थ-मन्त्रैः जयादि-होमे क्रियमाणे
गन्धर्व-होम-मन्त्र एव तद्-अप्सरसां कीर्तनं कृत्वा
“तस्मै स्वाहा” इति गन्धर्वाय होमं कृत्वा,
“ताभ्यः स्वाहा” इति सर्वत्र सर्व-नाम-शब्देनैव अप्सरसो होम
इति कपर्दि-मतानुसारेण पन्थाः सूचितः ॥

---

विश्वेदेवा ऋषयः

---

ऋ॒ता॒षाड् (=ऋतेन शाततीति) ऋ॒तधा॑मा॒ ऽग्नि॒र् ग॑न्ध॒र्वः। स इ॒दं ब्रह्म॑क्ष॒त्रं पा॑तु। तस्मै॑ स्वाहा॒ ।
तस्यौष॑धयोऽप्स॒रस॒ ऊर्जो॒ नाम॑। ता इ॒दं ब्रह्म॑क्ष॒त्रं पा॑न्तु। ताभ्य॒ः स्वाहा॑ ।

---

स॒ꣳहि॒तो वि॒श्व-सा॑मा॒ सूर्यो॑ गन्ध॒र्वस्॒ [स इ॒दं ब्रह्म॑क्ष॒त्रं पा॑तु। तस्मै॑ स्वाहा॒ ।]
तस्य॒ मरी॑चयोऽप्स॒रस॑ आ॒युव॑ः [+नाम॑। ता इ॒दं ब्रह्म॑क्ष॒त्रं पा॑न्तु। ताभ्य॒ः स्वाहा॑ ।]

सु॒-षु॒म्नस् सूर्य-रश्मिश् च॒न्द्रमा॑ गन्ध॒र्वः, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्य॒ नख्ष॑त्राण्य् अफ्स॒रसो॑ बे॒कुर॑यः [+नाम॑। ता इ॒दं ब्रह्म॑क्षत्रं पा॑न्तु। ताभ्यः॒ स्वाहा॑ ।]

भु॒ज्युस्सु॑प॒र्णो य॒ज्ञो ग॑न्ध॒र्वस्, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्य॒ दख्षि॑णा अफ्स॒रस॑स् स्त॒वाः [+नाम॑। ता इ॒दं ब्रह्म॑क्षत्रं पा॑न्तु। ताभ्यः॒ स्वाहा॑ ।]

प्र॒जाप॑तिर्वि॒श्वक॑र्मा॒ मनो॑ गन्ध॒र्वः, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्य॑र्ख्सा॒मान्य॑फ्स॒रसो॒ वह्न॑यः [+नाम॑। ता इ॒दं ब्रह्म॑क्षत्रं पा॑न्तु। ताभ्यः॒ स्वाहा॑ ।]

इ॒षि॒रो वि॒श्वव्य॑चा॒ वातो॑ गन्ध॒र्वः, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्यापो॑ऽफ्स॒रसो॑ मु॒दाः [+नाम॑। ता इ॒दं ब्रह्म॑क्षत्रं पा॑न्तु। ताभ्यः॒ स्वाहा॑ ।]

भुव॑नस्य पते॒ यस्य॑ त उ॒परि॑ गृ॒हा इ॒ह च॑ ।
स नो॑ रा॒स्वाज्या॑निꣳ रा॒यस्पोष॑ꣳ सु॒वीर्य॑ꣳ सव्ँ॒वथ्स॒रीणा॑ꣳ स्व॒स्तिम् ।

प॒र॒मे॒ष्ठ्य् अधि॑पतिर् मृ॒त्युर् ग॑न्ध॒र्वः, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्य॒ विश्व॑मफ्स॒रसो॒ भुवः॑ [+नाम॑। ता इ॒दं ब्रह्म॑क्षत्रं पा॑न्तु। ताभ्यः॒ स्वाहा॑ ।]

सु॒ख्षि॒तिस्सु॒भूतिर्भ॒द्रकृ॒थ्सुव॑र्वान् , प॒र्जन्यो॑ गन्ध॒र्वः, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्य॑ वि॒द्युतो॑ऽफ्स॒रसो॒ ('ता इदं ब्रह्म क्षत्रं पान्तु') रुचो॑ [+नाम॑। ता इ॒दं ब्रह्म॑क्षत्रं पा॑न्तु। ताभ्यः॒ स्वाहा॑ ।]

दू॒रेहे॑तिरमृड॒यो मृ॒त्युर्ग॑न्ध॒र्वः, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्य॑ प्र॒जा अ॑फ्स॒रसो॑ भी॒रुवः॑ [+नाम॑। ता इ॒दं ब्रह्म॑क्षत्रं पा॑न्तु। ताभ्यः॒ स्वाहा॑ ।]

चारुः॑ कृपण-का॒शी कामो॑ गन्ध॒र्वः, [स इ॒दं ब्रह्म॑क्षत्रं पा॑तु। तस्मै॒ स्वाहा॒ ।]
तस्या॒धयो॑ऽफ्स॒रसः॑ शो॒चय॑न्तीर्नाम॒ स इ॒दम्ब्रह्म॑ ख्षत्रम्पा॑तु॒ ता इ॒दम्ब्रह्म॑ ख्षत्रम्पा॑न्तु॒ ताभ्य॒स् (अप्सरोभ्यः) स्वाहा॑॥

स नो॑ भुवनस्य पते॒ यस्य॑ त उ॒परि॑ गृ॒हा इ॒ह च॑ ।
उ॒रु ब्रह्म॑णे॒ऽस्मै ख्षत्रा॑य॒ महि॒ शर्म॑ यच्छ ॥ [21]

नमो॑ अस्तु स॒र्पेभ्यो॑
ये के च॑ पृथि॒वीम् अनु॑।
ये अ॒न्तरि॑क्षे दि॒वि
तेभ्य॑स् स॒र्पेभ्यो॒ नमः॑॥

येऽ॑दो, रो॑च॒ने दि॒वो,
ये वा॒ सूर्य॑स्य र॒श्मिषु॑ ।
येषा॑म् अ॒प्सु सदः॑ कृ॒तं
तेभ्यः॑ स॒र्पेभ्यो॒ नमः॑ ॥

या इष॑वो यातु॒धाना॑नां॒
ये वा॒ व॒नस्पती॒ꣳ॒र् अनु॑ ।
ये वा॑ऽव॒टेषु॒ (→बिलेषु) शेर॑ते॒
तेभ्यः॑ स॒र्पेभ्यो॒ नमः॑ ॥

अ॒यम्पु॒रो हरि॑केश॒स् सूर्य॑रश्मिः ।

तस्य॑ रथगृ॒थ्सश् च॒ रथौ॑जाश्च सेनानिग्राम॒ण्यौ॑ ।

पु॒ञ्जि॒क॒स्थ॒ला च॑ कृतस्थ॒ला चा॑फ्स॒रसौ॑ ।

या॒तु॒धाना॑ हे॒ती, रख्षा॑ꣳसि॒ प्रहे॑तिः।
[तेभ्यो॒ नम॒स्, ते नो॑ मृडयन्तु।
ते यन्द्विष्मो यश्च॑ नो॒ द्वेष्टि, तव्ँ॒ वो॒ जम्भे॑ दधामि]

अ॒यन् द॑ख्षि॒णा वि॒श्वक॑र्मा ।

तस्य॑ रथस्व॒नश्च॒ रथे॑चित्रश्च सेनानिग्राम॒ण्यौ॑ । मे॒न॒का च॑ सहज॒न्या चा॑फ्स॒रसौ॑ ।

द॒ङ्क्ष्ण॑वः॑ प॒शवो॑ हे॒तिः॒, पौरु॑षेयो व॒धः॒ प्रहे॑तिः।
[तेभ्यो॒ नम॒स्, ते नो॑ मृडयन्तु।
ते यन् द्विष्मो यश्च॑ नो॒ द्वेष्टि, तव्ँ॒ वो॒ जम्भे॑ दधामि]

अ॒यम्प॒श्चाद्वि॒श्वव्य॑चाः ।
तस्य॒ रथ॑प्रोत॒श्चास॑मरथश्च सेनानिग्राम॒ण्यौ॑ ।
प्र॒म्लोच॑न्ती चा॒नु॒म्लोच॑न्ती चाफ्स॒रसौ॑
स॒र्पा हे॒तिर्, व्या॒घ्राः॒ प्रहे॑तिः।
[तेभ्यो॒ नम॒स्, ते नो॑ मृडयन्तु।
ते यन् द्विष्मो यश्च॑ नो॒ द्वेष्टि, तव्ँ॒ वो॒ जम्भे॑ दधामि]

अ॒यम् उ॑त्त॒राथ् स॒यँ॒यद्-व॑सुः ।
तस्य॑ सेन॒जिच्च॑ सु॒षेण॑श्च सेनानिग्राम॒ण्यौ॑ ।
वि॒श्वाची॑ च घृ॒ताची॑ चाफ्स॒रसौ ।
आपो॑ हे॒तिर्, वात॒ः॒ प्रहे॑तिः ।
[तेभ्यो॒ नम॒स्, ते नो॑ मृडयन्तु।
ते यन् द्विष्मो यश्च॑ नो॒ द्वेष्टि, तव्ँ॒ वो॒ जम्भे॑ दधामि]

अ॒यम् उ॒पर्य् अ॒र्वाग्-व॑सुः ।
तस्य॒ तार्ख्ष्य॒श्चारि॑ष्टनेमिश्च सेनानिग्राम॒ण्यौ॑ ।
उ॒र्वशी॑ च पू॒र्व-चि॑त्तिश् चाफ्स॒रसौ॑ ।
वि॒द्युद्+हे॒तिर्, अ॑वस्फू॒र्जन् प्रहे॑तिः ।

तेभ्यो॒ नमः॑ ।

ते नो॑ मृडयन्तु ।

ते यन् द्विष्मो यश्च॑ नो॒ द्वेष्टि , तव्ँ॒ वो॒ जम्भे॑ दधामि ।

त्रिष्टुप् १३,
१५ अनुष्टुप ।
अग्निर्ऋषिः चतुर्थकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः

01 आशुः शिशानो - त्रिष्टुप्

आशुः शिशानो(=तीक्ष्णो) वृषभो न युध्मो(=योधा)
घनाघनः(=घातकः) क्षोभणश् चर्षणीनाम्(=पदातीनाम्)।
संक्रन्दनो ऽनिमिष एक-वीरः
शतꣳ सेना **अजयत्** साकम् इन्द्रः ॥

02 सङ्क्रन्दनेनानिमिषेण जिष्णुना - त्रिष्टुप्

सङ्क्रन्दनेनानिमिषेण जिष्णुना
युत्-कारेण(=युद्धकारिणा) दुश्च्यवनेन धृष्णुना(=निर्भयेन)।
तद् इन्द्रेण **जयत** तत् **सहध्वं**
युधो नर इषु-हस्तेन वृष्णा(=कामवर्षकेन) ॥

03 स इषुहस्तैः - त्रिष्टुप्

स इषु-हस्तैः स निषङ्गिभिर् (=खड्गिभिर्) वशी
**सꣳस्रष्टा**(=संमिश्रकः) स युध(=योद्धा) इन्द्रो (पर)गणेन।
सꣳसृष्ट-जित् सोमपा बाहु-शर्ध्य(=बली)
ऊर्ध्व-धन्वा प्रतिहिताभिर् **अस्ता**(=क्षेप्ता) ॥

04 बृहस्पते परि - त्रिष्टुप्

बृहस्(=वाचस्)पते परि **दीया**(=द्रव) रथेन
रक्षो-हा ऽमित्राꣳ **अपबाधमानः**।
**प्रभञ्जन्** सेनाः प्रमृणो(=प्रहिंस्रो) युधा
**जयन्न्** अस्माकम् **एध्य् अविता** रथानाम् ॥

05 गोत्रभिदं गोविदम् - त्रिष्टुप्

गोत्र-भिदं गो-विदं वज्र-बाहुं
जयन्तम् अज्म(म) प्रमृणन्तम् ओजसा।
इमꣳ सजाता अनु **वीरयध्वम्**
इन्द्रꣳ सखायो ऽनु **सꣳ रभध्वम्** ॥

06 बलविज्ञाय स्थविरः - त्रिष्टुप्

बलविज्ञायः स्थविरः प्रवीरः
सहस्वान् वाजी सहमान उग्रः।
अभिवीरो अभिसत्वा(←सत्वन्=योद्धृ) सहोजा
जैत्रम् इन्द्र रथम् **आ तिष्ठ** गोवित् ॥

07 अभि गोत्राणि - त्रिष्टुप्

अभिगोत्राणि सहसा **गाहमानो**
ऽदायो वीरश् शत-मन्युर् इन्द्रः।
दुश्च्यवनꣲ पृतना-षाड् अ-युध्यो
ऽस्माकꣳ सेना **अवतु** प्र युत्सु ॥

08 इन्द्र आसाम् - त्रिष्टुप्

इन्द्र आसां नेता, बृहस्पतिर्
दक्षिणा, यज्ञः पुर **एतु** सोमः।
देव-सेनानाम् अभिभञ्जतीनां
जयन्तीनां मरुतो **यन्त्व्** अग्रे ॥

09 इन्द्रस्य वृष्णो - त्रिष्टुप्

इन्द्रस्य वृष्णो, वरुणस्य राज्ञ,
आदित्यानां मरुताꣳ शर्ध उग्रम्।
महा-मनसां भुवन-च्यवानां
घोषो देवानां **जयताम्** उद्-अस्थात् ॥

10 अस्माकमिन्द्रः समृतेषु - त्रिष्टुप्

अस्माकम् इन्द्रः सम्-ऋतेषु ध्वजेष्व्
अस्माकं या इषवस् ता **जयन्तु**।
अस्माकं वीरा **उत्तरे भवन्त्व्**
अस्मान् उ देवा **अवता** हवेषु ॥

11 उद्धर्षय मघवन्नायुधान्युत्सत्वनाम् - त्रिष्टुप्

**उद्+धर्षय** मघवन्न् आयुधान्य्
उत् सत्वनां(=योद्धॄणां) मामकानां महाꣳसि।
उद् वृत्र-हन् वाजिनां वाजिनान्य्(=वेगाः)
उद् रथानां **जयताम् एतु घोषः** ॥

12 उप प्रेत

**उप प्रेत जयता** नरस्
स्थिरा वस् **सन्तु** बाहवः ।
इन्द्रो वश् **शर्म यच्छत्व्**
अनाधृष्या यथा **ऽसथ** ।

13 अवसृष्टा परा पत

**अवसृष्टा परा पत**
शरव्ये ब्रह्म-सꣳशिता ।
**गच्छामित्रान् प्र** [19] **विश**
मैषाङ् **कश्चनोच्छिषः** ।

14 मर्माणि ते

मर्माणि ते वर्मभिश् **छादयामि**
सोमस् त्वा राजा ऽमृतेनाभि **वस्ताम्** ।
उरोर् वरीयो वरिवस्(=धनम्) ते **अस्तु**
**जयन्तन्** त्वाम् **अनु मदन्तु** देवाः ।

यत्र बाणास् **सम्पतन्ति**
कुमारा विशिखा इव (चपलाः)।
इन्द्रो नस् तत्र वृत्रहा
विश्वाहा **शर्म यच्छतु** ॥ [20]

अग्निर्ऋषिः

चतुर्थकाण्डे सप्तमप्रपाठके तृतियोऽनुवाकः

शञ् च मे (कल्पताम्) ।

मयश् च मे (कल्पताम्) ।

प्रियञ् च मे (कल्पताम्) ।

अनु कामश् च मे (कल्पताम्) ।

कामश् च मे (कल्पताम्) ।

सौमनसश् च मे (कल्पताम्) ।

भद्रञ् च मे (कल्पताम्) ।

श्रेयश् च मे (कल्पताम्) ।

वस्यश् च मे (कल्पताम्) ।

यशंश् च मे (कल्पताम्) ।

भगंश् च मे (कल्पताम्) ।

द्रविंणञ् च मे (कल्पताम्) ।

यन्ता चं मे (कल्पताम्) ।

धर्ता चं मे (कल्पताम्) ।

ख्षेमंश् च मे (कल्पताम्) ।

धृतिंश् च मे (कल्पताम्) ।

विश्वंञ् च मे (कल्पताम्) ।

महंश् च मे (कल्पताम्) ।

सवँविच् चं मे (कल्पताम्) ।

ज्ञात्रंञ् च मे (कल्पताम्) ।

सूश् चं मे (कल्पताम्) ।

प्रसूश् चं मे (कल्पताम्) ।

सीरंञ् च मे (कल्पताम्) ।

लयश् चं म (कल्पताम्) ।

ऋतञ् चं मे (कल्पताम्) ।

अमृतंञ् च मे (कल्पताम्) ।

अयख्ष्मञ् च मे (कल्पताम्) ।

अनांमयच् च मे (कल्पताम्) ।

जीवातुंश् च मे (कल्पताम्) ।

दीर्घायुत्वञ् चं मे (कल्पताम्) ।

अनमित्रञ् चं मे (कल्पताम्) ।

अभंयञ् च मे (कल्पताम्) ।

सुगञ् चं मे (कल्पताम्) ।

शयंनञ् च मे (कल्पताम्) ।

सूषा चं मे (कल्पताम्) ।

सुदिनंञ् च मे (कल्पताम्) ।

त्रिष्टुप्
अग्निर्ऋषिः

चतुर्थकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः

ममांग्ने वर्चो विहवेष्व् **अंस्तु**
वयन् त्वेन्धांनास् तनुवंम् **पुषेम** ।
मह्यंन् **नमन्ताम्** प्रदिशश् चतंस्रस्
त्वया ऽध्यंख्षेण पृतंना **जयेम** ।

ममं देवा विंहवे **संन्तु** सर्वं
इन्द्रांवन्तो मरुतो विष्णुंर् अग्निः ।
ममान्तरिंख्षम् उरु गोपम् **अंस्तु**
मह्यवँ वातः॰ **पवताङ्** कामें अस्मिन् ।

मयिं देवा द्रविंणम् **आ यंजन्ताम्**
मय्य् आशीर् **अंस्तु** मयिं देव-हूंतिः ।
दैव्या होतांर् **आ**(→शाकले होतारो) **वनिषन्त**(=संभजन्तु?) [29]
पूर्वे ऽरिंष्टास् **स्याम** तनुवां सुवीराः ।

मह्यंयँ **यजन्तु** मम यानि हव्या
ऽऽकूंतिस् **सत्या** मनंसो मे **अस्तु** ।
एनो **मा नि गांङ्** कतमच्चन+अहवँ
विश्वें देवासो अधिं **वोचता** मे ।

देवींः षड्-उर्वीर् उरु णंx **कृणोत**
विश्वें देवास इह **वीरयध्वम्** ।
**मा हांस्महि** प्रजया मा तनूभिर्
**मा रंधाम** द्विषते सोम राजन् ।

अग्निर् मन्युम् **प्रतिनुदन्** पुरस्ताद् [30]
अदंब्धो गोपाः॰ **परि पाहि** नस् त्वम् ।
प्रत्यञ्चो **यन्तु** नि-गुतः॰(←गु गमने) पुनस् ते
ऽमा(=सह)+एषांञ् चित्तम् प्रबुधा **वि नेंशत्**(=विनश्यतु) ।

धाता धांतृणाम् भुवंनस्य यस् पतिंर्
देवः॰ संवितारंम् अभिमातिषाहंम् ।
इमयँ यज्ञम् अश्विनोभा बृहस्-पतिंर्
देवाः॰ **पान्तु** यजंमानन् न्यर्थात् ।

उरु-व्यचां नो महिषश् शर्म **यःसद्**
अस्मिन् हवें पुरुहूतः॰ पुंरुख्षु ।
स नः॰ प्रजायैं हर्यश्व **मृडयेन्द्र**
**मा** नो **रीरिषो** मा परां **दाः** ।

ये नंस् सपत्ना **अप** ते **भंवन्त्व्**
इन्द्राग्निभ्याम् अवं **बाधामहे** तान् ।
वसंवो रुद्रा आंदित्या उंपरि-स्पृशंम्
मोग्रञ् चेत्तारम् अधिराजम् **अंक्रन्** ।

अर्वाञ्चम् इन्द्रंम् अमुतों **हवामहे**
यो गो-जिद् धंन-जिद् अंश्व-जिद् यः ।
इमन् नों यज्ञवँ विंहवे **जुंषस्व**
+अस्य **कुंर्मो** हरिवो मेदिनंन्(=स्नेहवन्तं) त्वा ॥ [32]

उपरिष्टात् ज्योतिर्जगती , ८ पङ्क्तिः १४ बृहती, २१- २२ त्रिष्टुप्
विश्वेदेवा ऋषयः

चतुर्थकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः

अग्निः

अ॒ग्नेर् **मं॑न्वे** प्र॒थ॒मस्य॒ प्रचे॑तसो॒
यं पा॑ञ्चं॑जन्यं (=पञ्चभ्यो जनेभ्यो हितं) ब॒हवं॑स् **समि॒न्धतें॑**।
विश्वं॑स्यां वि॒शि **प्रं॑विविशि॒वाꣳसं॑म् ईमहे॒**
स नो **मुञ्च॒त्व्** अꣳहं॑सः ॥

यस्ये॒दं **प्रा॒णन् निं॑मि॒षद्** यद् **एजं॑ति॒** (=कम्पते)
यस्यं॑ **जा॒तं जनं॑मानं** च॒ केवं॑लम् (जगत्)।
**स्तौम्य्** अ॒ग्निं **नां॑थि॒तो** (=फलयाञ्चावान्) **जों॑हवीमि॒**
स नों॑ **मुञ्च॒त्व्** अꣳहं॑सः ॥

इन्द्रः

इन्द्रं॑स्य **मन्ये** प्र॒थ॒मस्य॒ प्रचे॑तसो
वृ॒त्र-घ्नः स्तोमा॒ (=स्तोत्राणि) उप॒ माम् **उ॒पागुंः**।
यो **दा॒शुषं॑ः** सु॒कृतो॒ ह॒व॒म् **उप॒ गन्ता॒**
स नों॑ **मुञ्च॒त्व्** अꣳहं॑सः ॥

यः सं॑ग्रा॒मं **नयं॑ति॒ संव॒शी** यु॒धे
यः पु॒ष्टानिं॑ **सꣳसृ॒जतिं॑** त्र॒याणिं॑ (गावश्वपुरुषाः)।
**स्तौमीन्द्रं॑** नाथि॒तो **जों॑हवीमि॒**
स नों॑ **मुञ्च॒त्व्** अꣳहं॑सः ॥

मित्रावरुणौ

**म॒न्वे** वां॑ मित्रा-वरुणा॒, तस्यं॑ (वैरिणो) वित्त॒ꣳ॒
सत्यौं॑जसा **दृꣳहणा॒**(=स्तम्भयन्तौ) यन् **नु॒देथें॑**।
या राजां॑नꣳ (आदित्यं) स॒रथं॑ **या॒थ** (वृष्ट्यै) उं॑ग्रा॒
ता नों॑ **मुञ्च॒त॒म्** आगं॑सः ॥

यो वा॒ꣳ॒ रथं॑ ऋजु-रं॑श्मिः स॒त्य-धं॑र्मा॒
मिथु॒श्(=मिथ्या) **चरं॑न्तम् उप॒यातिं॑ दू॒षयन्॑** ।
**स्तौमिं॑** मि॒त्रावरुणा॒ **नाथि॒तो जों॑हवीमि॒** तौ नों॑ **मुंच॒तम्** आगं॑सः ।

वायुः, सविता च

वा॒योस् सं॑वि॒तुर् वि॒दथां॑नि(=वेदनानि) **मन्महे**
याव् आं॑त्म॒न्वद् **बिं॑भृ॒तो** यौ च॒ **रक्षं॑तः** ।
यौ विश्वं॑स्य **परि॒भू बं॑भूवतुस्**
तौ नों॑ **मुञ्च॒त॒म्** आगं॑सः ॥

उप॒ श्रेष्ठां॑ न आ॒शिषों॑
दे॒वयो॒र् धर्में॑(=कर्मणि) **अस्थिरन्**(√स्था)।
**स्तौमिं॑** वा॒युꣳ सं॑वि॒तारं॑ **नाथि॒तो जों॑हवीमि॒**
तौ नों॑ **मुंच॒त॒म्** आगं॑सः ॥

अश्विनौ

र॒थीतं॑मौ रथी॒नाम् **अंह्व**(=आह्वे)
ऊ॒तये॒ शु॒भं॒ **गमिं॑ष्ठौ** सु॒यमें॑भि॒र् अश्वैः॑ ।
ययों॑र् वा॒ं दे॒वौ दे॒वेष्व् अनिं॑शित॒म् ओज॒स्
तौ नों॑ **मुञ्च॒त॒म्** आगं॑सः ॥

यद् **अयां॑तं** वह॒तुꣳ सू॒र्यायां॑स्(=तन्मातुः)
त्रि-च॒क्रेणं॑ स॒ꣳ॒ सदं॑म् **इ॒च्छमां॑नौ** ।
**स्तौमिं॑** दे॒वाव् अ॒श्विनौं॑ **नाथि॒तो जों॑हवीमि॒**
तौ नों॑ **मुञ्च॒त॒म्** आगं॑सः ॥

मरुतः

म॒रुतां॑ **मन्वे॒** अधिं॑ नो **ब्रुवन्तु॒**
प्रेमां॑ वाच॒ं विश्वां॑म् **अवन्तु॒** विश्वें॑ ।
आ॒शून् **हुं॑वे** सु॒-यमां॑न् ऊ॒तये॒(√अव्)
ते नों॑ **मुञ्च॒न्त्व्** एनं॑सः ॥

ति॒ग्मम् आयुं॑धं वीडि॒तꣳ(=दृढम्) सहं॑स्वद्
दि॒व्यꣳ शर्द्धः॒(=बलं) पृतं॑नासु **जि॒ष्णु** ।
**स्तौमिं॑** दे॒वान् म॒रुतों॑ **नाथि॒तो जोहं॑वीमि॒**
ते नों॑ **मुञ्च॒न्त्व्** एनं॑सः ॥

विश्वे देवाः

दे॒वानां॑ मन्वे॒ अधिं॑ नो **ब्रुवन्तु॒**
प्रेमां॑ वाचं॑, विश्वां॑म् **अवन्तु** विश्वें॑ ।
आ॒शून् **हुं॑वे** सु॒यमां॑न् ऊ॒तये॒(√अव्)
ते नों॑ **मुञ्च॒न्त्व्** एनं॑सः ॥

यद् इ॒दं मां॑ **ऽभि॒शोचं॑ति॒**
पौरुं॑षेये॒ण दैव्यें॑न ।
**स्तौमि॒** विश्वां॑न् दे॒वान् **नं॑थि॒तो जोहं॑वीमि॒**
ते नों॑ **मुञ्च॒त्व्** एनं॑सः ॥

अनुमतिः

**अनुं॑** नो॒ऽद्यानुं॑मतिर् (=ऊनचन्द्रा पौर्णमासी)
य॒ज्ञन् दे॒वेषुं॑ **मन्यताम्** ।
अ॒ग्निश् चं॑ हव्य॒वाहं॑नो॒,
**भवं॑तान्** दा॒शु॒षे॒ मयं॑ः ।

**अन्व्** इद् अं॑नुमते॒ त्वम् [34]
**मन्यां॑सै॒** शञ्चं॑ नx **कृधि** ।
क्रत्वे॒ दख्षां॑य नो **हिनु॒**(=प्रेरय)
प्र ण॒ आयूꣳ॑षि **तारिषः** ।

वैश्वानरः

**वै॒श्वा॒न॒रो** नं॑ ऊ॒त्या
**ऽऽप्र यां॑तु** परा॒वतं॑ः ।
अ॒ग्निर् उ॒क्थेन॒ वाहं॑सा ॥

पृ॒ष्टो(←पृच्छ्) दि॒वि, पृ॒ष्टो **अ॒ग्निः** पृं॑थि॒व्यां,
पृ॒ष्टो विश्वा॒ ओषं॑धी॒र् **आ विं॑वेश** ।
वै॒श्वा॒न॒रः सहं॑सा पृ॒ष्टो अ॒ग्निः
स नो॒ दिवा॒ स रि॒षः **पां॑तु॒** नक्तं॑म् ॥

द्यावा-पृथि॒वी

ये **अप्रं॑थेता॒म्** अमिं॑तेभि॒र् ओजों॑भि॒र्
ये प्रं॑ति॒ष्ठे **अभं॑वता॒वँ** वसूं॑नाम् । **स्तौमि॒** द्यावां॑-पृथि॒वी **नां॑थि॒तो जों॑हवीमि॒**
ते नों॑ **मुञ्च॒त॒म्** अꣳहं॑सः ।

उ॒र्वी रोदसी॒ **वरिं॑वx कृणोत॒ङ्**
ख्षेत्रं॑स्य पत्नी॒ अधिं॑ नो **ब्रूयातम्** ।
**स्तौमि॒** द्यावां॑पृथि॒वी **नां॑थि॒तो जों॑हवीमि॒**
ते नों॑ **मुञ्च॒त॒म्** अꣳहं॑सः ।

स्विष्टकृत्

यत् ते व॒यम् पु॑रुष-त्रा य॑विष्ठ+
अवि॑द्वा॑ꣳसश् **चकृ॒मा** कच्च॒न [38] आगः॑ ।
**कृ॒धी** स्व् अ॑स्मा॑ꣳ अदि॑ते॒र् अना॑गा
व्येना॑ꣳसि शिश्रथो॒(=दुर्बलं) विष्व॑ग् अग्ने॥

यथा॑ ह॒ तद् व॑सवो गौ॒र्यञ् चित् (गाम्)
प॒दि षि॒ताम्(=बद्धां) **अमु॑ञ्चता** यजत्राः ।
ए॒वा त्वम् अ॒स्मत् **प्र मु॑ञ्चा॒** व्यꣳहः॒
**प्रातां॒र्य्** अग्ने, **प्र॒तरान्** न॒ आयुः॑ ॥ [39]

स॒मीची॒ नामा॑सि प्राची॒ दिक्। तस्या॑स् ते॒ ऽग्निर् अधि॑पतिर्,
असि॒तो र॑क्षिता।

यश् चाधि॑पति॒र्, यश् च॑ गो॒प्ता - ताभ्यां॒ नम॒स्, तौ नो॑ मृडयताम्।
ते यं द्वि॒ष्मो, यश् च॑ नो॒ द्वेष्टि॒ - तं वां॒ जंभे॑ दधामि ।

मन्त्रः

ओ॒ज॒स्विनी॒ नामा॑सि दक्षि॒णा दिक्।
तस्या॑स् त॒ इन्द्रोऽधि॑पतिः, पृदा॑कू र॑क्षिता

यश् चाधि॑पति॒र्, यश् च॑ गो॒प्ता - ताभ्यां॒ नम॒स्, तौ नो॑ मृडयताम्।
ते यं द्वि॒ष्मो, यश् च॑ नो॒ द्वेष्टि॒ - तं वां॒ जंभे॑ दधामि ।

प्राची॒ नामा॑सि प्र॒तीची॒ दिक्।
तस्या॑स् ते॒ सोमोऽधि॑पतिः स्व॒जो र॑क्षिता

यश् चाधि॑पति॒र्, यश् च॑ गो॒प्ता - ताभ्यां॒ नम॒स्, तौ नो॑ मृडयताम्।
ते यं द्वि॒ष्मो, यश् च॑ नो॒ द्वेष्टि॒ - तं वां॒ जंभे॑ दधामि ।

अ॒व॒स्थावा॒ नामा॒स्युदी॑ची दिक्।
तस्या॑स् ते॒ वरु॑णोऽधि॑पतिस् ति॒रश्च॑राजी र॑क्षिता

यश् चाधि॑पति॒र्, यश् च॑ गो॒प्ता - ताभ्यां॒ नम॒स्, तौ नो॑ मृडयताम्।
ते यं द्वि॒ष्मो, यश् च॑ नो॒ द्वेष्टि॒ - तं वां॒ जंभे॑ दधामि ।

अधि॑पत्नी॒ नामा॑सि बृह॒ती दिक्।
तस्या॑स् ते॒ बृह॒स्पति॒र् अधि॑पतिः श्वि॒त्रो र॑क्षि॒ता

यश् चाधि॑पति॒र्, यश् च॑ गो॒प्ता - ताभ्यां॒ नम॒स्, तौ नो॑ मृडयताम्।
ते यं द्वि॒ष्मो, यश् च॑ नो॒ द्वेष्टि॒ - तं वां॒ जंभे॑ दधामि ।

व॒शिनी॒ नामा॑सीयं दिक्।
तस्या॑स् ते॒ य॒मो ऽधि॑पतिः क॒ल्माष॑-ग्रीवो र॑क्षि॒ता

यश् चाधि॑पति॒र्, यश् च॑ गो॒प्ता - ताभ्यां॒ नम॒स्, तौ नो॑ मृडयताम्।
ते यं द्वि॒ष्मो, यश् च॑ नो॒ द्वेष्टि॒ - तं वां॒ जंभे॑ दधामि ।

हे॒तयो॒ नाम॑ स्थ॒, तेषां॑ वः पु॒रो गृ॒हा, अ॒ग्निर् व॒ इष॑वः, सलि॒लो
वा॑त-ना॒मम्।

(वाताशिनो हि सर्पाः। तस्य वातस्य नमयिता = उपस्थापयिता। नपुंसकलिङ्गं सामान्यविवक्षायाः।)

तेभ्यो॑ वो॒ नम॒स्, ते नो॑ मृडयत।

ते यन् **द्वि॒ष्मो**
यश्च॑ नो॒ **द्वेष्टि॒**
तव॑ँ वो॒ **जम्भे॑ दधामि** ॥

नि॒लि॒म्पा नाम॑ स्थ॒, तेषां॑ वो दक्षि॒णा गृ॒हा, पि॒तरो॑ व॒ इष॑वः,
स॒ग॑रो वात-ना॒मम्।

तेभ्यो॑ वो॒ नम॒स्, ते नो॑ मृडयत।

ते यन् **द्वि॒ष्मो**
यश्च॑ नो॒ **द्वेष्टि॒**
तव॑ँ वो॒ **जम्भे॑ दधामि** ॥

व॒ज्रिणो॒ नाम॑ स्थ॒, तेषां॑ वः प॒श्चाद् गृ॒हा, स्वप्नो॑ व॒ इष॑वो॒, गह्व॑रो
वात-ना॒मम्।

तेभ्यो॑ वो॒ नम॒स्, ते नो॑ मृडयत।

ते यन् **द्वि॒ष्मो**
यश्च॑ नो॒ **द्वेष्टि॒**
तव॑ँ वो॒ **जम्भे॑ दधामि** ॥

अ॒व॒स्थावा॑नो॒ नाम॑ स्थ॒, तेषां॑ व उ॒त्त॒रद् गृ॒हा, आपो॑ व॒ इष॑वः,
समु॒द्रो वा॑तना॒मम्।

तेभ्यो॑ वो॒ नम॒स्, ते नो॑ मृडयत।

ते यन् **द्वि॒ष्मो**
यश्च॑ नो॒ **द्वेष्टि॒**
तव॑ँ वो॒ **जम्भे॑ दधामि** ॥

अधि॑पतयो॒ नाम॑ स्थ॒, तेषां॑ व उ॒परि॑ गृ॒हा, व॒र्षं व॒ इष॒वो, ऽव॑स्वान्
वात-ना॒मम्।

तेभ्यो॑ वो॒ नम॒स्, ते नो॑ मृडयत।

ते यन् **द्वि॒ष्मो**
यश्च॑ नो॒ **द्वेष्टि॒**
तव॑ँ वो॒ **जम्भे॑ दधामि** ॥

क्रव्या नाम॑ स्थ॒ पार्थि॑वास्, तेषां॑ व इ॒ह गृ॒हा, अन्नं॑ व॒ इष॑वो,
नि॒मि॒षो वा॑तना॒मम्।

तेभ्यो॑ वो॒ नम॒स्, ते नो॑ मृडयत।

ते यन् **द्वि॒ष्मो**
यश्च॑ नो॒ **द्वेष्टि॒**
तव॑ँ वो॒ **जम्भे॑ दधामि** ॥

श॒तायु॑धाय श॒तवी॑र्याय
श॒तोत॑ये ऽभिमाति॒-षाहे॑ँ (नमः)। श॒तय॑ँ यो न॑श् श॒रदो॒ **अजी॑ता॒न्**
इन्द्रो॑ **नेष॒द्** अति॑ दुरि॒ताति॒ विश्वा॑ँ ।

ये च॒त्वारः॑ प॒थयो॑(=पन्थानो) देव॒याना॑
अन्त॒रा द्यावा॑-पृथि॒वी **वि॒यन्ति॑** ।
तेषा॒य॑ँ यो अ-ज्यानि॒म्(←ज्या जरायां) अ-जी॑तिम् **आ॒वहा॒त्** -
तस्मै॑ नो देवाः **परि॑ दत्ते॒ह** सर्वे॑ ।

ग्रीष्मो हेमन्त उत नो वसन्तश्
शरद् वर्षास् सुवितन्(←सृ) नो **अस्तु** ।
तेषाम् ऋतूनाꣳ शत-शारदानान्
निवात एषाम् अभये **स्याम** ।

इदुवथ्सराय(=संवत्सर+२) परिवथ्सराय(=संवत्सर+१)
सवँवथ्सराय **कृणुता** बृहन् नमः ।
तेषाँवँ वयꣳ सुमतौ यज्ञियानाञ्
ज्योग् अजीता अहतास् **स्याम** ।

भद्रान् नश् श्रेयस् **समनैष्ट** देवास्!
त्वया ऽवसेन(←अव=रक्षणे) **समशीमहि** त्वा (सोम!)।
स नो मयो-भूꣳ पितो(=अन्न) **आ विशस्व**
शन् तोकाय तनुवे स्योनः ।

भूतं भव्यं भविष्यद् वषड्ढ स्वाहा नमः।
ऋक् साम यजुर् वषड्ढ स्वाहा नमः।
गायत्री त्रिष्टुब् जगती वषड्ढ स्वाहा नमः।
पृथिव्य् अन्तरिक्षम् द्यौर् वषड्ढ स्वाहा नमः।
अग्निर् वायुः सूर्यो वषड्ढ स्वाहा नमः।
प्राणो व्यानोऽपानो वषड्ढ स्वाहा नमः।
अन्नं कृषिर् वृष्टिर् वषड्ढ स्वाहा नमः।
पिता पुत्रः पौत्रो वषड्ढ स्वाहा नमः।
भूर् भुवः सुवर् वषड्ढ स्वाहा नमः ।

(ज्येष्ठास्थः, रोहिणीस्थो वा) इन्द्रो दधीचो (=serpens/ orion) अस्थभिर्
वृत्राण्य् अप्रतिष्कुतः ।
**जघान** नवतीर् नव (→हेमन्त-दिनानि) ।

**इच्छन्न्** अश्वस्य(→यज्ञस्य) यच् छिरः(→अग्निं, उत्तरायणारम्भ-सूर्यवत् दधिक्रावाणं [pegasus])
पर्वतेष्व(→मेघेषु, हेमन्त-मासेषु) **अपश्रितम्** ।
तद् **विदच्** छर्यणावति ।

bce-3000-01-13
rohiNI
jyeShThA
equinox
shatabhiShak
pUrva phAlgunI
solstice

अत्राह(=अस्मिन्नेव) गोर्(=गन्तुः [चन्द्रमसो]) **अमन्वत**
नाम त्वष्टुर्(=दीप्तस्यादित्यस्य उत्तरायणारम्भे) **अपीच्यम्**(=अपचितम्, अन्तर्हितम् [रात्रौ]) । इत्था(=इत्थं) चन्द्रमसो गृहे (=अमावास्यायाम्, फाल्गुनीषु पौर्णमास्यां वा)॥

इन्द्रम् इद् गाथिनो(=गायकाः) बृहद्(साम्ना)
इन्द्रम् अर्केभिर्(←अर्च, ऋक्) अर्किणः ।
इन्द्रं वाणीर्(→यजूंषि) **अनूषत**(←णु स्तुतौ) ॥

इन्द्र इद्+धर्योः **सचा**(←सच् अनुसरणे)
**सम्मिश्ल** आ वचो **युजा** ।
इन्द्रो वज्री हिरण्ययः ॥(5)

इन्द्रो दीर्घाय चक्षस
आ सूर्यं **रोहयद्** दिवि ।
वि गोभिर् अद्रिम् **ऐरयत्** ॥(5)

इन्द्र वाजेषु नो ऽव
सहस्र–प्र-धनेषु च ।
उग्र उग्राभिर् ऊतिभिः ॥

तमिन्द्रं **वाजयामसि**
महे वृत्राय **हन्तवे** ।
स वृषा वृषभो **भुवत्** ॥

इन्द्रस् स **दामने कृतः** ।
ओजिष्ठस् स बले **हितः** ।
द्युम्नी श्लोकी स सोम्यः ।

गिरा वज्रो न सम्भृतः ।
सबलो अनपच्युतः ।
ववक्षुर् उग्रो अस्तृतः ॥ 35 ॥

मेनिवारणम्

चक्षुषो हेते मनसो हेते,
वाचो हेते ब्रह्मणो हेते ।
यो मा ऽघायुर् **अभिदासति**(=अभिचरति),
तम् अग्ने मेन्या(=मन्युना) **ऽमेनिं कृणु** ।

यो मा चक्षुषा यो मनसा,
यो वाचा ब्रह्मणा ऽऽघायुर् **अभिदासति** ।
तयाऽग्ने त्वं मेन्या,
अमुम् **अमेनिं कृणु** ।

अभिचार-प्रतीकारः

यत् किञ्चासौ मनसा यच् च वाचा,
यज्ञैर् **जुहोति** यजुषा हविर्भिः ।
तन् मृत्युर् निर्ऋत्या **संविदानः**(=समाहितः),
पुरा दिष्टाद्(=दैवात् तदनुकूलाद्) आहुतीर् अस्य **हन्तु** ।

यातुधाना निर्ऋतिर् आदु(=अनु) रक्षः,
ते अस्य **घ्नन्त्व्** अनृतेन सत्यम् ।
इन्द्रेषिता आज्यमस्य **मथ्नन्तु**,
मा तत् **समृद्धि** यद् असौ **करोति** ।

प्रतिज्ञा

**हन्मि** तेऽहं कृतꣳ हविः,
यो मे घोरम् **अचीकृतः**(=अकार्षीः) ।
**अपाञ्चौ** त उभौ बाहू,

**अपनह्याम्य्** (=बध्नामि) आस्यम् ।

---

**अपनह्यामि** ते बाहू,
**अपनह्याम्य्** आस्यम् ।
अग्नेर् देवस्य ब्रह्मणा,
सर्वं ते ऽ**वधिषं** कृतम् ।

---

अभिचार-प्रतीकारः

पुरा ऽमुष्य वषट्कारात्,
यज्ञं देवेषु नस् **कृधि** ।
स्विष्टम् अस्माकं **भूयात्**,
माऽस्मान् **प्रापन्न्** अरातयः ।

---

अन्ति दूरे **सतो** अग्ने,
**भ्रातृव्यस्याऽऽभिदासतः** ।
वषट्कारेण वज्रेण,
कृत्याꣳ **हन्मि कृताम्** अहम् ।

---

यो मा नक्तं दिवा सायम्,
प्रातश् चाह्नो **निपीयति**(=बाधते) ।
अद्या तम् इन्द्रवज्रेण,
भ्रातृव्यं **पादयामसि**(=पातयामि) ।

---

प्राणो **रक्षति** विश्वम् **एजत्** ।
**इर्यो भूत्वा** बहुधा बहूनि ।
स इथ् सर्वꣳ **व्यानशे**(=व्याप्तवान्) ।

---

यो देवो देवेषु विभूर् अन्तः ।
आ-वृद् **ऊदात्**(←वचने) क्षेत्रिय् अध्व-गद् वृषा ।
तम् इत् प्राणम् मनसोप **शिक्षत** ।
अग्रन् देवानाम् इदम् **अत्तु** नो हविः ।

---

मनसश् चित्ता+इदम् ।
भूतम् भव्यञ् च **गुप्यते** ।
तद् +हि देवेष्व् अग्रियम् ॥1॥

---

आ न **एतु** पुरश् चरम् ।
सह देवैर् इमꣳ हवम्(=आह्वानम्) ।
मनश् श्रेयसिश्रेयसि ।
कर्मन्(→णि) यज्ञ-पतिन् **दधत्** ।(5)

---

**जुषताम्** मे वाग् इदꣳ हविः ।
विराड् देवी पुरोहिता ।
हव्य-वाड् **अनपायिनी** ।

---

यया रूपाणि बहुधा **वदन्ति** ।
पेशाꣳसि देवाꣳ परमे जनित्रे ।
सा नो विराड् **अनपस्फुरन्ती** ॥2॥
वाग्-देवी **जुषताम्** इदꣳ हविः ।

---

चक्षुर् देवानाञ् (→सूर्यः) ज्योतिर् अमृते **न्यक्तम्** ।
अस्य (→सर्वस्य) विज्ञानाय बहुधा **निधीयते** ।
तस्य (→चक्षुषोः) सुम्नम् **अशीमहि** ।
मा नो **हासीद्** विचक्षणम् ।

---

आयुर् इन् नꣳ **प्रतीर्यताम्** ।
अनन्धाश् चक्षुषा वयम् ।
जीवा ज्योतिर् **अशीमहि** ।
सुवर् ज्योतिर् उतामृतम् ।

---

श्रोत्रेण भद्रम् उत **शृण्वन्ति** सत्यम् ।
श्रोत्रेण वाचम् **बहुधोद्यमानाम्** ।
श्रोत्रेण मोदश् च महश् च **श्रूयते** ।
श्रोत्रेण सर्वा दिश आ **शृणोमि** ।

---

येन प्राच्या उत दक्षिणा । प्रतीच्यै दिशश् **शृण्वन्त्य्** उत्तरात् ।
तद् इच् छ्रोत्रम् **बहुधोद्यमानम्** ।
अरान् न नेमिꣳ परि सर्वम् **बभूव** ॥3॥(5)

---

सिꣳहे व्याघ्र उत या पृदाकौ(=अजगरे) ।
**त्विषिर्** अग्नौ ब्राह्मणे सूर्ये या ।
इन्द्रयꣳ या **देवी** सुभगा **जजान** ।
सा न **आगन्** वर्चसा **सवꣳ विदाना** ।

---

या राजन्ये, दुन्दुभाव् आयतायाम् ।
अश्वस्य क्रन्द्ये, पुरुषस्य मायौ ।
इन्द्रयꣳ या देवी सुभगा **जजान** ।
सा न **आगन्** वर्चसा **सवꣳ विदाना** ।

---

या हस्तिनि द्वीपिनि या हिरण्ये ।
**त्विषिर्** अश्वेषु पुरुषेषु गोषु ॥16॥
इन्द्रयꣳ या **देवी** सुभगा **जजान** ।
सा न **आगन्** वर्चसा **सवꣳ विदाना** ।

---

रथे, अक्षेषु, वृषभस्य वाजे ।
वाते, पर्जन्ये, वरुणस्य शुष्मे ।
इन्द्रयꣳ या देवी सुभगा **जजान** ।
सा न **आगन्** वर्चसा **सवꣳ विदाना** ।

---

(हे आज्यमन्थ!) राड् असि। विराड् असि ।

---

सम्राड् असि। स्व-राड् असि ।

---

इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ **श्रीणामि** ।

---

इन्द्राय त्वौजस्वत ओजस्वन्तꣳ **श्रीणामि** ॥17॥

---

इन्द्राय त्वा पयस्वते पयस्वन्तꣳ **श्रीणामि** ।

---

इन्द्राय त्वाऽऽयुष्मत आयुष्मन्तꣳ **श्रीणामि** ।

---

(आज्यमन्थ!) तेजो ऽसि । (यजमान!) तत् ते प्रयच्छामि ।

तेजस्वद् **अस्तु** मे मुखम् ।
तेजस्वच् छिरो **अस्तु** मे ।
तेजस्वान् विश्वतः प्रत्यङ् ।
तेजसा **सम्पिपृग्धि** मा ।

---

ओजोऽसि । तत्ते प्रयच्छामि ॥18॥

---

ओजस्वद् **अस्तु** मे मुखम् । ओजस्वच् छिरो **अस्तु** मे ।
ओजस्वान् विश्वतः प्रत्यङ् । ओजसा **सम्पिपृग्धि** मा ।

---

पयोऽसि । तत्ते प्रयच्छामि ।

---

पयस्वद् **अस्तु** मे मुखम् ।
पयस्वच्छिरो **अस्तु** मे ।
पयस्वान् विश्वतः प्रत्यङ् ।
पयसा **सम्पिपृग्धि** मा ॥19॥

---

आयुरसि । तत्ते प्रयच्छामि ।

---

आयुष्मद् **अस्तु** मे मुखम् ।
आयुष्मच् छिरो **अस्तु** मे ।
आयुष्मान् विश्वतः प्रत्यङ् ।
आयुषा **सम्पिपृग्धि** मा ।

---

इमम् अग्न आयुषे वर्चसे **कृधि** ।
प्रियꣳ रेतो वरुण सोम राजन् ।
मातेवास्मा अदिते शर्म **यच्छ** ।
विश्वे देवा जरदष्टिर् यथा **ऽसत्** ॥20॥

---

आयुर् **असि**।
विश्वायुर् **असि** । सर्वायुर् **असि**, सर्वम् आयुर् **असि** ।

---

यतो वातो मनोजवाः ।
यतः **क्षरन्ति** सिन्धवः ।
तासान् त्वा सर्वासाꣳ रुचा ।
**अभिषिञ्चामि** वर्चसा ।

---

समुद्र **इवासि** गह्मना ।
सोम इवास्य् **अदाभ्यः** ।
अग्निर् इव विश्वतः प्रत्यङ् ।
सूर्य इव ज्योतिषा विभूः ॥21॥ (5)

---

अपायँ यो द्रवणे रसः ।
तम् अहम् अस्मा आमुष्यायणाय (→पुत्राय)
तेजसे ब्रह्मवर्चसाय **गृह्णामि** ।

---

अपायँ य ऊर्मौ रसः ।
तम् अहम् अस्मा आमुष्यायणाय
ओजसे वीर्याय **गृह्णामि** ।

---

अपायँ यो मध्यतो रसः ।
तम् अहम् अस्मा आमुष्यायणाय
पुष्ट्यै प्रजननाय **गृह्णामि** ।

---

अपायँ यो यज्ञियो रसः ।
तम् अहम् अस्मा आमुष्यायणाय
+आयुषे दीर्घायुत्वाय गृह्णामि ॥22॥

---

अन्नम्

---

अहम् **अस्मि** प्रथमजा (=प्रथमजनयिता) ऋतस्य (=यज्ञस्य) ।
पूर्वं देवेभ्यो अमृतस्य नाभिः ।
यो मा **ददाति**, स इद् एव मा (अन्नरूपं) **ऽऽवाः** (=आवृणोति [पश्चात्])।
अहम् (दात्रे) अन्नम्, (अदत्वा) अन्नम् अदन्तम् **अद्मि**।

---

पूर्वम् (मरण/नरक-)अग्नेर् अपि **दहत्य्** अन्नम् (अदातारम्)।
यत् तौ (→ऽदाता, दाता च) हा **ऽऽसते**, अहम्(←स्वरः??) उत्तरेषु ।
व्यात्तम् अस्य (=अन्न-देवस्य) पशवस् (=ये ऽदातारस् तान्प्रति) सुजम्भम् ।
**पश्यन्ति** धीरा (→दातारः), **प्रचरन्ति** पाकाः (=मूढा [अदातारः]) ।

---

**जहाम्य्** अन्यन्, **न जहाम्य्** अन्यम् ।
अहम् अन्नं, (उक्त-नियम-)वशम् इच् **चरामि** ।
(दात्रदात्रोः) समानम् अर्थं (→नियमं) **पर्येमि** (केवलम्) - "भुञ्जत् (=पालयन्) ।
को माम् अन्नं मनुष्यो **दयेत**?"।

---

पराके (→लोके) अन्नं **निहितं** लोक एतत् ।
विश्वैर् देवैः पितृभिर् **गुप्तम्** अन्नम् ।
यद् **अद्यते लुप्यते**, यत् **परोप्यते** (=बहिस्त्यज्यते) (अस्मिलँ लोके) ।
शततमी (=.०१), **सा तनूर्** मे बभूव (पर-लोके) ।

---

महान्तौ चरू (=कुम्भौ) सकृद् दुग्धेन **पप्रौ**(←पूरणे) ।
दिवं च **पृश्नि** (=स्वल्पम् [अपि]) पृथिवीं च साकम् ।
तत् **संपिबन्तो न मिनन्ति** (=हिंसन्ति आत्मनः) वेधसः ।
नैतद् भूयो **भवति**, नो कनीयः (अपि च पर्याप्तः) ।

---

अन्नं प्राणम्, अन्नम् अपानम् **आहुः** ।
अन्नं मृत्युं तम् उ जीवातुम् (=जीवनौषधिम्) **आहुः** ।
अन्नम् ब्रह्माणो जरसं **वदन्ति** ।
अन्नम् **आहुः** प्रजननम् प्रजानाम् ।

---

मोघम् अन्नं **विन्दते** अ-प्र-चेताः (अदातृत्वेन लक्षितः) ।
सत्यम् **ब्रवीमि** वध इथ्स तस्य ।
नार्यमणम् **पुष्यति** नो सखायम् ।
केवलाघो **भवति** केवलादी ।

---

अहम् मेघस् स्तनयन् **वर्षन्न् अस्मि** ।
माम् **अदन्त्य्**, अहम् **अद्म्य्** अन्यान् ॥ 61 ॥
अहꣳ सद् अमृतो **भवामि** ।
मद् आदित्या अधि सर्वे **तपन्ति** ।

---

वाक्

---

देवीं वाचम् **अजनयन्त** देवास्
तां विश्वरूपाः पशवो **वदन्ति** ।
सा नो मन्द्रेषम् ऊर्जं **दुहाना**
धेनुर् वाग् अस्मान् **उपसुष्टुतैतु** ।

यद् वाग् वदन्त्य् अविचेतनानि
राष्ट्री देवानां निषसाद मन्द्रा (अस्मत्कर्मणि)।
चतस्र (दिग्देवताः) ऊर्जं दुदुहे पयांसि
क्वस्विद् अस्याः परमं जगाम ।

अनन्ताम् अन्ताद् अधि **निर्मितां** महीयँ
यस्यां देवा **अदधुर्** भोजनानि (होममन्त्रैरश्नन्ति)।
एकाक्षरां द्विपदाꣳ षट्पदां च
वाचं देवा **उपजीवन्ति** विश्वे ।

वाचं देवा **उपजीवन्ति** विश्वे
वाचं गन्धर्वाः पशवो मनुष्याः ।
वाचीमा विश्वा भुवनान्य् **अर्पिता**
सा नो हवं **जुषताम्** इन्द्रपत्नी (बहुव्रीहेर् ङीप्) ।

वाग् अक्षरं प्रथमजा ऋतस्य
वेदानां माता ऽमृतस्य नाभिः ।
सा नो **जुषाणोप** यज्ञम् **आगाद्**
**अवन्ती** देवी सुहवा मे **अस्तु** ।

याम् ऋषयो मन्त्रकृतो मनीषिणः+
+**अन्वैच्छन्** देवास् तपसा श्रमेण ।
तां देवीं वाचँ हविषा **यजामहे**
सा नो **दधातु** सुकृतस्य लोके ।

चत्वारि वाक् परिमिता पदानि
तानि **विदुर्** ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि (=परा-पश्यन्ती-मध्यमाः) **निहिता** नेङ्गयन्ति
तुरीयं वाचो (=वैखरी) मनुष्या **वदन्ति** ॥

श्रद्धा

श्रद्धया ऽग्निः **समिध्यते**
श्रद्धया **हूयते** हविः ।
श्रद्धां भगस्य मूर्धनि
वचसा **वेदयामसि** ॥

प्रियं श्रद्धे **ददतः**
प्रियं श्रद्धे **दिदासतः** ।
प्रियं भोजेषु यज्वस्व्
इदं म **उदितं कृधि** ॥

यथा देवा असुरेषु
श्रद्धाम् उग्रेषु **चक्रिरे** ।
एवं भोजेषु यज्वस्व्
अस्माकम् **उदितं कृधि** ॥

श्रद्धां देवा यजमाना
वायुगोपा **उपासते** ।
श्रद्धां हृदय्यया ऽऽकूत्या(=संकल्पक्रियया [उपासते]),
श्रद्धया **विन्दते** वसु ॥

श्रद्धां प्रातर् **हवामहे**
श्रद्धां मध्यन्दिनं **परि** ।
श्रद्धां सूर्यस्य निम्रुचि(=निमज्जने)
श्रद्धे **श्रद्धापयेह** नः ॥

श्रद्धा देवानधि **वस्ते** ।
श्रद्धा विश्वम् इदञ् जगत् ।
श्रद्धाङ् कामस्य मातरम् ।
हविषा **वर्धयामसि** ।

ब्रह्म

ब्रह्म (=मन्त्रः ([सौरमण्डलयज्ञे])) जज्ञानं (=उत्पन्नम्) प्रथमं पुरस्ताद्
वि सीमतस् सुरुचो वेन आवः ।
स बुध्न्या (=मूले भवः ([खस्य सूर्यः])) उपमा अस्य विष्ठाः (=विस्थितः),
सतश्च योनिम् (सूर्यम्) असतश्च विवः (=विवृतवान्) ।

पिता विराजाम्, ऋषभो रयीणाम् ।
अन्तरिख्षवँ विश्व-रूप **आविवेश** ।
तम् अर्कैर् **अभ्यर्चन्ति** वथ्सम् ।
ब्रह्म सन्तम् ब्रह्मणा **वर्धयन्तः** ।

ब्रह्म देवान् **अजनयत्** ।
ब्रह्म विश्वम् इदञ् जगत् ।
ब्रह्मणः ख्षत्रन् **निर्मितम्** ।
ब्रह्म ब्राह्मण आत्मना ।

अन्तर् अस्मिन्न् इमे लोकाः ॥ 67 ॥
अन्तर् विश्वम् इदञ् जगत् ।
ब्रह्मैव भूतानाञ् ज्येष्ठम् ।
तेन को ऽर्हति स्पर्धितुम् ।

ब्रह्मन् देवास् त्रयस्-त्रिꣳशत् ।
ब्रह्मन्न् इन्द्र-प्रजापती ।
ब्रह्मन् ह विश्वा भूतानि ।
नावीवान्तस् **समाहिता** ।

चतस्र आशाᳶ प्रचरन्त्वग्नयः ।
इमन्नो यज्ञन्नयतु प्रजानन्न् ।
घृतम्पिन्वन्नजरꣳ सुवीरम् ॥ 68 ॥
ब्रह्म समिद्भवत्याहुतीनाम् ।

गौः

आ गावो **अग्मन्न्** उत भद्रम् **अक्रन्त्**
**सीदन्तु** गोष्ठे **रणयन्त्व्** अस्मे ।
प्रजावतीᳶ पुरुरूपा इह *स्युर्
इन्द्राय पूर्वीर् उषसो **दुहानाः** ।

इन्द्रो **यज्वने** (हविः) **पृणते च शिक्षत्य्,**
उपेद् **ददाति**, न स्वं **मुषायति** ।
भूयोभूयो रयिम् इद् अस्य **वर्धयन्न्**
अभिन्ने खिल्ये (स्वर्गे) **नि दधाति** देवयुम्(=देवकामम्) ॥

न ता (गाः) **नंशन्ति**(←नश्), **न दंभाति** तस्करः।
नैनां अमित्रो व्यथिर्(←व्यथ) **आदंधर्षति** ।
देवाँश् च याभिर् **यजंते ददांति** च
ज्योग् इत् ताभिः (उभय-लोकयोः) **सचते**(←समवाये) गोपंतिः सह ॥

---

न ता (गाः) अर्वा(=अश्वः) रेणु-कंकाटो(=उत्थापकः) **अश्नुते** (स्वाभाविक-वेगात्)
**न** संस्कृत-त्रम् (यष्टि-मन्तम्) **उपं यन्ति** ता अभि ।
उरुगायम् अभंयं (स्थानं) तस्य ता अनु
गावो मर्तस्य **वि चरन्ति** यज्वनः ॥

---

गावो भगो, गाव इन्द्रो मे अच्छात् ।
गावस् सोमस्य प्रथमस्य भखः ।
इमा या गावस्, स जनास इन्द्रः ।
**इच्छामीद्** +हृदा मनसा चिदिन्द्रम् ।

---

यूयं गांवो! **मेदयथा** कृशं चिद् (स्वामिनम्),
अ-श्रीरं(=श्रीलं) चित् **कृणुथा** सु-प्रतीकम् (अङ्ग-पुष्ट्या)।
भद्रं गृहं **कृणुथ** भद्र-वाचो
बृहद् वो वयं(=अन्नं) **उच्यते** सभासु ॥

---

प्रजावंतीः (गाः), सू-यवंसं (भक्षणेन) **रिशन्तीः**।
शुद्धा अपः सु-प्रपाणे **पिबन्तीः** ।
**मा** वः स्तेन **ईशत** माघशंसः।
**परि** वो हेती रुद्रस्य **वृञ्ज्यात्** ।

---

उपेदम् उपपर्चनम् (तृणादिकं)।
आसु गोषूप-**पृच्यताम्** ।
उप-ऋषभस्य रेतसि ।
उपेन्द्र तव वीर्ये ॥ 70 ॥

---

सूर्याचन्द्रमसौ

ता सूर्याचन्द्रमसा विश्व-भृत्तमा महत् ।
तेजो वसुमद् **राजतो** दिवि ।
सामात्माना **चरतस्** साम-चारिणा (न भेद-चारिणौ) ।
ययोर् व्रतन् न **ममे** जातु देवयोः ।

---

उभाव् अन्तौ **परि यात** अर्म्या(=गत्या) ।
दिवो न रश्मीꣳस् **तनुतो व्य्** अर्णवे ।
उभा **भुवन्ती** भुवना कवि-क्रतू ।
सूर्या न चन्द्रा **चरतो** हता-मती ।

---

पती द्युमद् विश्व-विदा उभा दिवः ।
सूर्या उभा चन्द्रमसा विचख्षणा ॥ 71 ॥
विश्व-वारा **वरिवा**(=पूजितौ) +उभा वरेण्या ।
ता नो **ऽवतम्** मतिमन्ता महिव्रता ।

---

विश्व-वपरी(←वप) प्रतरणा **तरन्ता** ।
सुवर्-विदा दृशये भूरि-रश्मी ।
सूर्या हि चन्द्रा वसु त्वेष-दर्शता ।
मनस्विनोभा **ऽनुचरतो** नु सन् दिवम् ।

---

अस्य (→तवेन्द्रस्य) श्रवो नद्यः सप्त **बिभ्रति**
द्यावाक्षामा पृथिवी दर्शतं(=दर्शनीयं) वपुः ।
अस्मे(=अस्मभ्यं) सूर्याचन्द्रमसा **ऽभिचक्षे**(=कथयसि)
श्रद्धे(=श्रद्धया) कम्(=सुखम्) इन्द्र **चरतो** वि-तर्तुरम्(=त्वरया) ॥

---

पूर्वापरञ् **चरतो** माययैतौ ।
शिशू **क्रीडन्तौ** परि यातो अ-ध्वरम्(=अ-हिंसम् →यज्ञम्) ।
विश्वान्य् (तयोर्) अन्यो भुवना **ऽभि चष्टे** ।
ऋतून् अन्यो **विदधञ् जायते** पुनः ।(5)

---

पावमान्यः - अश्वो वेहतम्

हिरण्यवर्णाश् शुचय꣡ पावका,
यासु जातx कश्यपो, यास्विन्द्रः ।
अग्निँ या गर्भन् दधिरे, विरूपास् -
ता न आपश्शꣳ स्योना भवन्तु ।

---

यासाꣳ राजा वरुणो याति मध्ये,
सत्यानृते अवपश्यञ् जनानाम् । मधुश्चुतश् शुचयो या꣡ पावकास् -
ता न आपश् शꣳ स्योना भवन्तु ।

---

यासान् देवा दिवि कृण्वन्ति भख्षयं -
या अन्तरिख्षे बहुधा भवन्ति । या꣡ पृथिवीम् पयसोन्दन्ति शुक्रास् -
ता न आपश् शꣳ स्योना भवन्तु ।

---

शिवेन मा चख्षुषा पश्यतापश् -
शिवया तनुवोप स्पृशत त्वचम् मे । सर्वाꣳ अग्नीꣳर् अप्सु-षदो हुवे वो,
मयि वर्चो बलम् ओजो नि धत्त ।

---

आपः

आपो भद्रा, घृतम् इद् आप आसुर् -
अग्नीषोमौ **बिभ्रत्य्**, आप इत् ताः ।
तीव्रो रसो मधु-पृचाम् अरङ्-गम (→रसः)
**आ** मा प्राणेन सह वर्चसा **गन्** ।

---

आद्(=अतः) इत् **पश्याम्य्** उत वा **शृणोम्य्**
आ मा घोषो **गच्छति** वाङ् न आसाम् ।
**मन्ये** भेजानो(←भज) अमृतस्य तर्हि
हिरण्य-वर्णा **अतृपयं** यदा वः ।

---

आपो हि ष्ठा मयोभुवस्
ता न ऊर्जे(जाः) दधातन ।
महे रणाय(=रमणीयाय) चक्षसे(=दर्शनाय) ॥

---

नासदीयम्

01 नासदासीन्नो सदासीत्तदानीम् - त्रिष्टुप्

नासद् आसीन्, नो सदासीत् तदानीम् । नासीद् रजो, नो व्योमा परो यत् ।
किम् आवरिवः(=आवरणीयं)? कुह(=क्व)? कस्य शर्मन्(णे)? अम्भः
किम् आसीद् गहनं गभीरम् ?

02 न मृत्युरासीदमृतम् - त्रिष्टुप्

न मृत्युर्, अमृतं तर्हि न । रात्रिया अह्न आसीत् प्रकेतः (=सङ्केतः [ज्योतींषि]) ।
आनीद् (=अचेष्टयत) अवातꣳ (स्वयमाश्रयेण) स्वधया तद् एकम् (ब्रह्म)।
तस्माद् +हाऽन्यं न परः किञ्चनास ।

03 तम आसीत्तमसा - त्रिष्टुप्

तम (ब्रह्म) आसीत्, तमसा गूढम् अग्रे प्रकेतम् (=रहस्यम्)। (यथा)
सलिलꣳ सर्वम् आ इदम् ।
तुच्छेनाभ्व् अपिहितं यद् आसीत् । तमसस् तन्-महिना जायतैकम् (जगत्)।

04 कामस्तदग्रे समवर्ततािध - त्रिष्टुप्

कामस् तद् अग्रे समवर्तताधि (=आधिक्ये)। मनसो रेतः प्रथमं यद् आसीत् ।
सतो बन्धुम् असति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषा (=बुद्ध्या)।

05 तिरश्चीनो विततो - त्रिष्टुप्

तिरश्चीनो विततो रश्मिर् एषाम् । अधस्विद् आसी३द्; उपरिस्विद् आसी३त् ।
रेतोधा(=बीजानि) आसन्, महिमान (पर्वतादयः) आसन् ।
स्वधा (शक्तिः [माया]) अवस्तात्(=अधस्तात्), प्रयतिः(प्रयत्नः) पुरस्तात् ।

06 को अद्धा - त्रिष्टुप्

को अद्धा वेद क इह प्रवोचत् । कुत आ जाता कुत इयं विसृष्टिः ।
अर्वाग् देवा अस्य विसर्जनाय । अथा को वेद यत आ बभूव ।

07 इयं विसृष्टिर्यत - त्रिष्टुप्

इयं विसृष्टिर् यत आबभूव । यदि वा (स्वरूपं) दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन् - सो अङ्ग वेद यदि वा न वेद ।

---

किं स्विद्वनं क उ स वृक्ष **आस**(आसीत् इति तैत्तिरीयपाठः) -
यतो द्यावापृथिवी **निष्टतक्षुः**(←तक्ष) ।
मनीषिणो मनसा **पृच्छतेद्** उ तद् -
यद् **अध्यतिष्ठद्** भुवनानि **धारयन्** ।

---

ब्रह्म वनम् ब्रह्म स वृक्ष **आसीत्** ॥ 76 ॥
यतो द्यावापृथिवी **निष्टतख्षुः**(←तक्ष) ।
मनीषिणो मनसा **विब्रवीमि** वः ।
**ब्रह्माध्यतिष्ठद्** भुवनानि **धारयन्** ।

---

भाग्य-सूक्तम् - प्रातर् अग्निम्

प्रातर् अग्निं, प्रातर् इन्द्रं **हवामहे**
प्रातर् मित्रावरुणा, प्रातर् अश्विना ।
प्रातर् भगं, पूषणं, ब्रह्मणस्पतिं
प्रातः सोमम्, उत रुद्रं **हुवेम** ॥१॥

---

प्रातर्-जितं (=जयशीलं) भगम् उग्रं **हुवेम**
वयं पुत्रम् अदितेर् यो विधर्ता।
आध्रश् (=दरिद्रश्) चिद् यं मन्यमानस् तुरश्(=त्वरमाणो)-चिद्
राजा चिद् यं **भगं भक्षी**(=भजामी)**त्याह** ॥२॥

---

भग प्रणेतर्, भग सत्यराधो!
भगेमां धियम् **उदवा** (=रक्ष) ददन् नः ।
भग प्र णो **जनय** गोभिर् अश्वैर्
भग प्र नृभिर् **नृवन्तः स्याम** ॥३॥

---

उतेदानीं **भगवन्तः स्याम**+
+उत प्रपित्व (=सायङ्काले) उत मध्ये अह्नाम् ।
उतोदिता मघ-वन्त्! सूर्यस्य
वयं देवानां **सुमतौ स्याम** ॥४॥

---

भग एव भग-वाँ अस्तु देवास्
तेन वयं **भगवन्तः स्याम** ।
तं त्वा भग सर्व इज् **जोहवीति** (←जोहवीमीति तैत्तिरीये)
स नो भग **पुर एता भवेह** ॥५॥

---

सम् अध्वरायोषसो **नमन्त**,
दधिक्रावेव (=pegasus-अश्व इव खे) शुचये पदाय (प्रोष्ठ-पदरूपेण खे, आधाने ऽश्वक्रमवद् भुवि)।
(खचक्रे विपरीतदिशि स्वनक्षत्रय् उत्तर-फाल्गुने वर्त्तित्वाद्)
अर्वाचीनं वसु-विदं (=धनलब्धारं) भगं नो
रथम् इवाश्वा वाजिन **आ वहन्तु** ॥६॥
(३००० BCE इति काले फाल्गुनीषु प्रोष्ठपदासु च सौरायनवर्तनम् अदृश्यतेति प्रासङ्गिकं स्यात्।)

---

अश्वावतीर् गोमतीर् न उषासो
वीरवतीस् **सदम् उच्छन्तु** (=प्रभातं कुर्वन्तु) भद्राः ।
घृतं दुहाना विश्वतः प्रपीना (=आप्यायन्त्यः)
**यूयं पात** स्वस्तिभिस् सदा नः ॥७॥

---

- zodiac = ऋतस्य पन्था +इति बालगङ्गाधरः।
- टीका: - तैत्तिरीयब्राह्मणभाष्ये सायणीय अत्र।
- सर्वस्मिन् भागय् आदिमा ऋक् पुरोनुवाक्या होत्रा - ऽध्वर्युणा चोदितेन - वाच्या। अपरा याज्या ऽध्वर्युणा।

कृत्तिकाः - अग्निः

अग्निर् नꣳ पातु कृत्तिकाः। नक्षत्रन् देवम् (=द्योतमानम्) इन्द्रियम्।
इदम् आसाँ विचक्षणम्। हविर् आसञ् जुहोत न।

---

यस्य **भान्ति रश्मयो** यस्य केतवः।
यस्येमा विश्वा भुवनानि सर्वा।
स कृत्तिकाभिर् अभि सँवसानः।
अग्निर् नो (=अस्मान्) देवस् **सुविते** (=सुप्राप्ते {कर्मफले}) **दधातु**॥

सुविते - अन्तोदात्तः - सूपमानात् क्तः।

---

{अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा।
अम्बायै स्वाहा।
दुलायै स्वाहा।
नितत्न्यै स्वाहा।
अभ्रयन्त्यै स्वाहा।

मेघय॑न्त्यै॒ स्वाहा॑।
व॒र्षय॑न्त्यै॒ स्वाहा॑।
चु॒पु॒णिका॑यै॒ स्वाहा॑।}

(Pleiades)

- अत्र विषुवदिनम् इति तैत्तिरीयब्राह्मणाद् अनुमेयम् ~ २३०० BCE।

रोहिणी - प्रजापतिः

प्र॒जाप॑ते(ः) **रोहि॒णी वे॑तु** (=भुङ्क्ताम्) पत्नी॑। वि॒श्वरू॑पा बृह॒ती चि॒त्रभा॑नुः।
सा नो॑ य॒ज्ञस्य॑ **सुवि॒ते**(=सुप्राप्ते {कर्मफले}) **द॑धातु**। यथा॒ **जीवे॑म श॒रद॒स्** सवी॑राः।

जीवे॑म - "तास्यनुदात्तेन्ङिददुपदेशाल् लसार्वधातुकम् अनुदात्तम् अन्विङोः" इत्य् अनुदात्तः प्रत्ययः

रो॒हि॒णी दे॒व्य् उद॑गात् पु॒रस्ता॑त्।
विश्वा॑ रू॒पाणि॑ प्रति॒मोद॑माना।
प्र॒जाप॑तिꣳ ह॒विषा॑ **व॒र्धय॑न्ती**।
प्रि॒या दे॒वाना॒म् **उप॑यातु य॒ज्ञम्**॥

{प्र॒जाप॑तये॒ स्वाहा॑ रोहि॒ण्यै॒ स्वाहा॑।
रोच॑मानायै॒ स्वाहा॑ प्र॒जाभ्यः॒ स्वाहा॑।}

(Aldebaran। )

- रोहिद्वर्णा नाम्नैव। ब्रह्महृदयं = capella = β taurii खलु रोहिणीशकटे (Taurus-मुखम्) वर्तते।
- "prajāpatī rohiṇyām agnim asṛjata" इति तैत्तिरीयब्राह्मणे। प्रजापति-रोहिणी-सङ्गमतः कृत्तिकास्व् अग्निर् जात इति कृत्वा तात्रिकाग्निमुखे दैवतसङ्गमेनाग्निं जायमानम् भावयन्तीति कस्तूरिरङ्गः।
- प्रजापतिः पुरा मृगशीर्षेण सम्बद्धः, पश्चाद् रोहिण्या, तयोस् सङ्गमतो ऽग्निः कृत्तिकासु जातः - एतद् विषुवस्थानचलन-द्योतकम् भाति।
- प्रजापत्यनुसरणकथा पश्चादुच्यते।
- विषुवदिनम् अत्रावर्तत ३००० BCE इति वर्षे।

मृगशीर्षम् - सोमः

**सोमो॒** राजा॑ मृगशी॒र्षेण॒ **आग॑न्न्** (=आयातु)।
शि॒वन् नक्ष॑त्रम् प्रि॒यम् अ॑स्य॒ धाम॑।
**आ॒प्याय॑मानो** ब॒हुधा॒ जने॑षु।
रेतꣳ॑ प्र॒जायँ॒ यज॑माने **दधातु**।

यत् ते॒ नक्ष॑त्रं **मृगशी॒र्षम् अस्ति॑**।
प्रि॒यꣳ रा॑जन् प्रि॒यत॑मम् प्रि॒याणा॑म्।
तस्मै॑ ते सोम **ह॒विषा॑ विधेम**।
शन् न॑ **एधि** द्वि॒पदे॒ शञ् चतु॑ष्पदे॥

द्वि॒पदे॒ - "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ"

{सोमा॑य॒ स्वाहा॑ मृगशी॒र्षाय॒ स्वाहा॑।
इ॒न्व॒काभ्यः॒ स्वाहौष॑धीभ्यः॒ स्वाहा॑।
रा॒ज्याय॒ स्वाहा॒ ऽभिजि॑त्यै॒ स्वाहा॑।}

(Orion belt)

- पुरा प्रजापतिना सम्बद्धम्। "प्रजापतेर् यत् सहजम् पुरस्तात्" इत्यनेन मृगशीर्षे ऽव्यङ्गस्योल्लेखो विशुवकाल इति केचित् - (~Apr 26 Julian 4500 BCE [TW])।
    - आग्रहायणी +इत्यपि नाम - पणिन्य्-अमरौ तथा। तैत्तिरीयसंहितायां (७.२ इत्यत्र) आग्रयणम् इत्यपि। पुरा ऽऽग्रयणेष्टयो तदैवाक्रियत - तत्रायनविशेषस्यारम्भात्।
    - वृषाकपिसूक्तम् अपि तद्विषये प्रवृत्तम्, यदा विषुवस्थानं वृषराशाव् अवर्तत।
    - तस्यैव सूर्येणसहोदिते यज्ञकालस्यारम्भो ऽवर्तत - तेन हि तस्य सोमाधिपत्यम्, यज्ञ इति नामान्तरम्।
- सोमो हि ब्राह्मणानां राजा। तस्यैवानुकरणं मेखलया दण्डेन +अजिनेन यज्ञोपवीतेनापि - पारसीकेषु ब्राह्मणेषु च!
- मृगशीर्षकथा ऽध आर्द्राभागे दृश्या।
- वृषाकपिर् इति +ऋग्वेदसूक्त इन्द्रस्य प्रियः, इन्द्राणीमन्युना शुना दष्टः कर्णे, शिरसा खण्डितः, पश्चात्+क्षान्तः।

आर्द्रा - रुद्रः

आ॒र्द्रया॑ **रु॒द्रꣳ** प्रथ॑मान (=प्रसिद्ध) **एति**। श्रेष्ठो॑ दे॒वाना॒म् पति॑र् अ॒घ्नियाना॑म् (=गवाम्)।
नक्ष॑त्रम् अस्य **ह॒विषा॑ विधेम** (=परिचरेम)। मा नꣳ॑ प्र॒जाꣳ री॑रिष॒न् मोत वी॒रान्।

**हे॒ती** रु॒द्रस्य॒ **परि॑ णो वृणक्तु**।
आ॒र्द्रा नक्ष॑त्रञ् **जु॒षताꣳ ह॒विर्** नः॑।
**प्र॒मु॒ञ्चमा॑नौ**** दुरि॒तानि॒ विश्वा॑।
अपा॒घशꣳ॑सन् नुदता॒म् **अरा॑तिम्**।॥

{रु॒द्राय॒ स्वाहा॒ऽऽर्द्रायै॒ स्वाहा॑। पिन्व॑मानायै॒ स्वाहा॑ प॒शुभ्यः॒ स्वाहा॑।}

पुन॑र्वसू - अदितिः

पुन॑र् नो दे॒व्य् **अदि॑तिस् स्पृणोतु** (=प्रीणयतु)।
पुन॑र्वसू न॒ **पुन॒र् आ+इ॒तां॒ य॒ज्ञम्**।
पुन॑र् नो **दे॒वा अ॒भिय॑न्तु** सर्वे॑।
पुन॑ः-पुनर् वो **ह॒विषा॑ यजामः**।

ए॒वा न दे॒व्य् अदि॑तिर् अन॒र्वा (=अनर्वाचीना)। विश्व॑स्य **भ॒र्त्री** जग॑त॒ः प्रति॒ष्ठा।
पुन॑र्वसू ह॒विषा॑ **व॒र्धय॑न्ती**। प्रि॒यम् दे॒वाना॒म् अप्य् **ए॑तु** पाथः॑ (=हविः)॥

{अदि॑त्यै॒ स्वाहा॑ पुन॑र्वसुभ्याम् स्वाहा॑।
भूत्यै॒ स्वाहा॑ प्र॒जात्यै॒ स्वाहा॑।}

(α , β Geminorum - Castor and Pollux)

तिष्यम् / पुष्यम् - बृहस्पतिः

बृह॒स्पति॑ः प्रथ॒मञ् **जाय॑मानः**। ति॒ष्य॑न् नक्ष॑त्रम् **अ॒भि सम्ब॑भूव**।
श्रेष्ठो॑ दे॒वाना॒म् पृत॑नासु जि॒ष्णुः। दि॒शोऽनु॒ सर्वा॒ अभ॑यन् नो **अस्तु**।

ति॒ष्य॑ः पु॒रस्ता॑द् उ॒त म॑ध्य॒तो नः॑। बृह॒स्पति॑र् न॒ः **परि॑ पातु** प॒श्चात्।
**बाधे॑ता॒न्** द्वेषो॒ अभ॑यङ् **कृणुताम्**। सु॒वीर्य॑स्य॒ पत॑यस् **स्याम**।

{बृह॒स्पत॑ये॒ स्वाहा॑ ति॒ष्या॑य॒ स्वाहा॑।
ब्र॒ह्म॒व॒र्च॒साय॒ स्वाहा॑।}

γ, δ and θ Cancri इति केचित्। Praesepe open cluster (M44) इति केचित्।

आश्रेषाः - सर्पाः

इ॒दꣳ स॒र्पेभ्यो॑ ह॒विर् **अ॑स्तु॒** जुष्ट॑म्। आ॒श्रे॒षा येषा॑म् **अनु॒यन्ति॒** चेतः॑।
ये अ॒न्तरि॑क्षम् पृथि॒वीङ् **क्षि॒यन्ति॑**(=अधिवसन्ति)। ते न॑स् स॒र्पासो॑ ह॒वम् **आग॑मिष्ठाः**।

ये रो॑च॒ने (मण्डले) सूर्य॒स्यापि॑ स॒र्पाः। ये दिव॑न् दे॒वीम् अनु॑ **स॒ञ्चर॑न्ति**।
येषा॑म् आश्रे॒षा **अ॑नु॒यन्ति** काम॑म्। तेभ्य॑स् स॒र्पेभ्यो॒ मधु॑मज् **जुहोमि**।

{स॒र्पेभ्यः॒ स्वाहा॑ऽऽश्रेषाभ्यः॒ स्वाहा॑।}
द॒न्द॒शूके॑भ्यः॒ स्वाहा॑॥

- δ, ε, η, ρ, σ, θ Hydrae
- वेदाङ्गज्योतिषानुसारम् अस्य मध्य आसीद् अयनारम्भः ~ ११०० BCE इत्यस्मिन्।

मघाः - पितरः

उप॑हूता॒ः पि॒तरो॒ ये म॒घासु॑। मनो॑जवसस् सु॒कृत॑स् सुकृ॒त्याः।
ते नो॒ नक्ष॑त्रे ह॒वम् **आग॑मिष्ठाः**। स्व॒धाभि॑र् य॒ज्ञम् प्र॒यत॑ञ् **जुषन्ताम्**।

ये अ॑ग्निद॒ग्धा ये ऽन॑ग्निदग्धाः। ये॑ ऽमुँल् लो॒कम् पि॒तर॑ः **क्षि॒यन्ति॑**।
याꣳश् च॑ **वि॒द्म** याꣳ उ॑ च॒ **न प्र॑वि॒द्म**। म॒घासु॑ य॒ज्ञꣳ सु॒कृत॑म् **जुषन्ताम्**॥

{पि॒तृभ्यः॒ स्वाहा॑ म॒घाभ्यः॒ स्वाहा॑ऽन॒घाभ्यः॒ स्वाहा॑
अ॒ग॒दाभ्यः॒ स्वाहा॑ ऽरुन्ध॒तीभ्यः॒ स्वाहा॑।}

- Regulus इति केचित्। " 6 stars - entire sickle of Leo” इत्यन्ये।

पूर्व-फल्गुन्यः - अर्यमा

ग॒वाम् पतिः॒ फल्गु॑नीनाम् **असि॒** त्वम्।
तद् अ॑र्यमन् वरुण-मित्र॒ चारु॑।
तन् त्वा॑ व॒यꣳ स॑नि॒तारꣳ (=दातारं) सनी॒नाम् (=दातव्यानाम्) (←नाम् अन्यतरस्याम् इत्य् अन्तोदात्तत्वात् स्वरः)।
जी॒वा जीव॑न्त॒म् उप॒ **सवँ॑विशेम**।

येने॒मा विश्वा॒ भुव॑नानि॒ **सञ्जि॑ता**। यस्य॑ दे॒वा **अ॑नु॒संयन्ति** चेतः॑।
अ॒र्य॒मा रा॒जा ऽजर॑स् **तुवि॒ष्मान्** (=वृद्धिमान्)। फल्गु॑नीनाम् ऋष॒भो **रोर॑वीति**॥

{अ॒र्य॒म्णे स्वाहा॑ फल्गु॑नीभ्या॒ꣳ स्वाहा॑।
प॒शुभ्यः॒ स्वाहा॑।}

(=δ, θ Leonis)

- अत्र वै यदा चन्द्रमा ऽवर्तत ३००० BCE इति वर्षे, तदाभूद् वत्सरारम्भः।
  - विवरणानि सौर-चान्द्र-मान-पृष्ठे।

उत्तर-फल्गुन्यः - भगः

श्रेष्ठो॑ दे॒वाना॑म् भगवो **भगासि**। तत् त्वा॑ **वि॒दु॒ᳲ** फल्गु॑नी॒स्, तस्य॑ वि॒त्तात् (=विद्धि)।
अ॒स्मभ्य॑ङ् क्ष॒त्रम् अ॒जर॑ꣳ सु॒वीर्य॑म्। गोम॑द् अश्व॑वद् उप सन् **नु॒देह**।

भगो॑ ह दा॒ता भग॒ इत् प्र॑दा॒ता। भगो॑ दे॒वीᳲ फल्गु॑नी॒र् **आवि॑वेश**। भग॒स्येत् तम् प्र॑स॒वङ् **गमेम**। यत्र॑ दे॒वैस् स॑ध॒मादं॑ (=सहहर्षं) **मदेम** (=प्राप्नुयाम)।॥

{भगा॑य॒ स्वाहा॒ फल्गु॑नीभ्या॒ꣳ॒ स्वाहा॑।
श्रेष्ठाया॑य॒ स्वाहा॑।}

Denebola - β, 93 Leonis

हस्तः - सविता

आया॑तु दे॒वस् **स॑वि॒तोप॑यातु**।
हि॒र॒ण्यये॑न सु॒वृता॒ रथे॑न।
**वह॒न्** हस्त॑ꣳ सु॒भगं॑ꣳ वि॒द्मनाप॑सम् (=विदितकर्मणा युक्तम्)।
**प्र॒यच्छ॑न्त॒म्** पपु॑रि॒म् (=पूरयितारम्) पुण्य॒म् अच्छ॑ (=अभिमुखं वर्तमानम्)।

हस्त॒ᳲ **प्रय॑च्छत्व्॒** अ॒मृत॑ꣳ॒ वसी॑यः।
दक्षि॑णेन॒ **प्रति॑गृभ्णीम** एनत्।
दा॒तार॑म् अ॒द्य ([यः]) स॑वि॒ता **वि॑देय** (=लभेय)।
यो नो॒ हस्ता॑य **प्रसु॒वाति॑** य॒ज्ञम्॥

{स॒वि॒त्रे स्वाहा॒ हस्ता॑य॒ स्वाहा॑
ऽऽदद॑ते स्वाहा॑ पृण॒ते स्वाहा॑
प्र॒यच्छ॑ते स्वाहा॑ प्रतिगृभ्ण॒ते स्वाहा॑।}

Corvus- α , β , γ , δ , ε Corvi.

चित्रा - त्वष्टा

त्वष्टा॒ नक्ष॑त्र॒म् **अ॒भ्ये॑ति** चि॒त्राम् (=Spica)।
सु॒भꣳ॑स॒सय॑ꣳ॒ (=सुजघनां) यु॒व॒तिꣳ॒ **रोच॑मानाम्**।
**नि॒वे॒शय॑न्न्** अ॒मृता॒न् मर्त्या॑ꣳ॒श् च।
रू॒पाणि॑ **पि॒ꣳ॒शन्** (=निरूपयन्) भुव॑नानि॒ विश्वा॑।

तन् न॒स् त्वष्टा॒ तद् उ॑ चि॒त्रा **विच॑ष्टाम्** (=वीक्षताम्)।
तन् नक्ष॑त्रम् **भूरि॒दा अ॑स्तु** मह्य॑म्।
तन्न॒ᳲ प्र॒जाव॑ꣳ॒ वी॒रव॑ती॒ꣳ॒ **सनोतु** (=ददातु)।
गोभि॑र् नो॒ अश्वै॒स् **सम॑नक्तु** य॒ज्ञम्॥

{त्वष्ट्रे॒ स्वाहा॑ चि॒त्रायै॒ स्वाहा॑।
चैत्रा॑य॒ स्वाहा॑ प्र॒जायै॒ स्वाहा॑।}

निष्ट्या, स्वातिः - वायुः

वा॒युर् नक्ष॑त्रम् **अ॒भ्ये॑ति** निष्ट्या॑म्(=Arctrus)।
ति॒ग्मशृ॑ङ्गो वृष॒भो **रोरु॑वाणः**।
**स॒मी॒रय॒न्** भुव॑ना मात॒रिश्वा॑ (←मातरि आकाशे श्वयति वर्द्धते)।
**अप॒** द्वेषा॑ꣳसि **नुदताम्** अरा॑तीः।

तन् नो॑ वा॒युस् तद् उ॒ निष्ट्या॑ **शृणोतु**।
तन् नक्ष॑त्रम् **भूरि॒दा अ॑स्तु** मह्य॑म्।
तन् नो॑ दे॒वासो॒ **अनु॑जानन्तु** काम॑म्।
यथा॒ **तरे॑म** दु॒रि॒तानि॒ विश्वा॑॥

{वा॒यवे॒ स्वाहा॒ निष्ट्या॑यै॒ स्वाहा॑।
का॒म॒चारा॑य॒ स्वाहा॒ऽभिजि॑त्यै॒ स्वाहा॑।}

विशाखे - इन्द्राग्नी

दूरम् अ॒स्मच्-छत्र॑वो **यन्तु** भी॒ताः।
तद् इ॑न्द्रा॒ग्नी **कृ॑णुताम्** तद् वि॒शाखे॑।
तन् नो॑ दे॒वा **अनु॑मदन्तु** य॒ज्ञम्।
प॒श्चात् पु॒रस्ता॒द् अभ॑यन् नो **अस्तु**।

नक्ष॑त्राणाम् अधि॑पत्नी॒ वि॒शाखे॑।
श्रेष्ठा॑व् इ॒न्द्राग्नी भुव॑नस्य गो॒पौ।
विषू॑च॒श् (=विभिन्नगतीन्) शत्रू॑न् **अप॒ बाध॑मानौ**।
अप॒ क्षुध॑न् **नुदताम्** अरा॑तिम्।॥

{इ॒न्द्रा॒ग्निभ्या॒ꣳ॒ स्वाहा॒ वि॒शाखा॑भ्या॒ꣳ॒ स्वाहा॑।
श्रैष्ठ्या॑य॒ स्वाहा॒ऽभिजि॑त्यै॒ स्वाहा॑।}

α, β Librae। रामायणानुसारम् इक्ष्वाकूणां नक्षत्रम् - 6.4.51

पूर्णिमा

पू॒र्णा प॒श्चाद् उ॒त पू॒र्णा पु॒रस्ता॑त्।
उन् म॑ध्य॒तः पौ॑र्णमा॒सी **जि॑गाय** (शत्रून्)।
तस्यां॑ दे॒वा अधि॑ **सं॒वस॑न्तः**।
उ॒त्त॒मे नाक॑ इ॒ह **मा॑दयन्ताम्**।

पृ॒थ्वी (=विस्तीर्णा) सु॒वर्चा॑ यु॑व॒तिः स॒जोषाः॑।
पौ॒र्णमा॒स्य् **उ॒दगा॒च्** छोभ॑माना।
(दुर्गतिपरिहारेण) **आ॒प्याय॒यन्ती** दुरि॒तानि॒ विश्वा॑।
उ॒रुन्(=विस्तीर्णाम्) दुहा॒ं (लिङ्गव्यत्ययः विभिक्तिव्यत्ययो वा) यज॑मानाय
य॒ज्ञम्।

{पौ॒र्णमा॒स्यै स्वाहा॒ कामा॑य॒ स्वाहा॒ गत्यै॑ स्वाहा॑}

अनूराधाः - मित्रः

**ऋ॒द्ध्यास्म॑** ह॒व्यैर् **नम॑सोप॒सद्य॑**, मि॒त्रन् दे॒वं(।), मि॒त्र॒धेय॑न् (=मित्रेण सम्पाद्यन्) नो **अ॒स्तु**।
अ॒नू॒रा॒धान् ह॒विषा॑ **व॒र्धय॑न्तः**।
श॒तञ् **जी॑वेम** श॒रदः॒ सवी॑राः।

चि॒त्रम् नक्ष॑त्रम् **उ॒दगा॑त्** पु॒रस्ता॑त्।
अ॒नू॒रा॒धास इति॒ यद् **वद॑न्ति**।
तन् मि॒त्र **ए॑ति** प॒थिभि॑र् देव॒यानैः॑।
हि॒र॒ण्ययै॑र् वित॑तैर् अ॒न्तरि॑क्षे॥

{मि॒त्राय॒ स्वाहा॑ ऽनू॒रा॒धेभ्यः॒ स्वाहा॑।
मि॒त्र॒धेया॑य॒ स्वाहा॒ ऽभि॒जि॑त्यै॒ स्वाहा॑।}

β, δ, η, ρ Scorpionis

ज्येष्ठा - इन्द्रः

इन्द्रो॑ ज्ये॒ष्ठाम् अनु॒ नक्ष॑त्रम् **ए॒ति**।
यस्मि॑न् वृ॒त्रं वृ॑त्र॒तूर्ये॑ (=वृत्रवधे) **त॒तार॑**।
तस्मि॑न् व॒यम् अ॒मृत॒न् **दुहा॑नाः**।
क्षुध॑न् **तरे॒म** दुरि॑ति॒न् दुरि॑ष्टिम्।

पु॒र॒न्द॒राय॑ वृष॒भाय॑ धृ॒ष्णवे॑।
अषा॑ढाय॒ (=अपरिभूताय) सह॑मानाय मी॒ढुषे॑ (=सेचकाय {वृष्ट्या})।
इन्द्रा॑य ज्ये॒ष्ठा मधु॑म॒द् **दुहा॑ना**।
**उ॒रुङ् कृ॑णोतु** यज॑मानस्य लो॒कम्।॥

{इन्द्रा॑य॒ स्वाहा॑ ज्ये॒ष्ठायै॒ स्वाहा॑।
ज्यैष्ठ्या॑य॒ स्वाहा॒ ऽभि॒जि॑त्यै॒ स्वाहा॑।}

(α, σ, and τ Scorpionis इति केचित्। Antares इत्यन्ये - द्वितीया रोहिणीवेति ब्राह्मणम्।)

मूलम् - निर्ऋतिः

मू॒लम् प्र॒जां वी॒रव॑तीं **वि॒देय**(=लभेय)।
परा॑च्य्(=पराङ्मुखा) **ए॒तु** निर्ऋ॑तिः परा॒चा (मार्गेण)।
गोभि॒र् नक्ष॑त्रम् (एव) प॒शुभि॒स् **सम॑क्तम्**,
अह॑र् **भू॒याद्** यज॑माना॒य मह्य॑म्।

अह॑र् नो अ॒द्य सु॑वि॒ते (=सुप्राप्ते {कर्मफले}) **द॑धातु**। मूल॒न् नक्ष॑त्रम्
इति॒ यद् **वद॑न्ति**।
परा॑चीं वा॒चा निर्ऋ॑तिन् **नु॒दामि**।
शि॒वम् प्र॒जायै॑ शि॒वम् **अ॑स्तु** मह्य॑म्॥

{प्र॒जाप॑तये॒ स्वाहा॒ मूला॑य॒ स्वाहा॑।
प्र॒जायै॒ स्वाहा॑।}

(ζ, η, θ, ι, κ, λ, and ν Scorpionis। मूलायाङ्गल्व् आकाशगङ्गाकेन्द्रम् अपि वर्तते!)

अषाढाः पूर्वाः - आपः

या दि॒व्या आपः॒ पय॑सा **सम्ब॒भू॒वुः**(=आकाशगङ्गा पार्श्वे वर्तमाना)।
(मेघादिरूपा) या अ॒न्तरि॑क्ष उ॒त (नद्यादिषु) पार्थि॑वी॒र् याः।
यासा॑म् अषा॒ढा **अ॑नु॒यन्ति॒** काम॑म्।
ता न॒ आपः॒ शꣳ स्यो॒ना (=सुखहेतवः) **भ॑वन्तु**।

याश् च॒ कू॒प्या याश् च॑ ना॒द्याः स॑मु॒द्रियाः॑।
याश् च॑ वैश॒न्तीर् (=पल्वलभवाः) उ॒त प्रा॑स॒चीर् (=प्रागता) याः।
यासा॑म् अषा॒ढा मधु॑ **भ॒क्षय॑न्ति**।
ता न॒ आपः॒ शꣳ स्यो॒ना (=सुखहेतवः) **भ॑वन्तु**॥

{अ॒द्भ्यः स्वाहा॑ ऽषा॒ढाभ्यः॒ स्वाहा॑।
स॒मु॒द्राय॒ स्वाहा॒ कामा॑य॒ स्वाहा॑।}

(δ, γ, η and ε Sagittarii। जलरूपाया आकाशङ्गङ्गायाः केन्द्रम् अस्य पार्श्वे।)

अषाढाः उत्तराः - विश्वे देवाः

तन् नो विश्वे उप **शृण्वन्तु** देवाः।
तद् अषाढा **अभिसंयन्तु** यज्ञम्।
तन् नक्षत्रम् **प्रथताम्** पशुभ्यः।
कृषिर् वृष्टिर् यजमानाय **कल्पताम्**।

शुभ्राᳵ कन्या युवतयस् सुपेशसः।
कर्मकृतस् सुकृतो वीर्यावतीः।
विश्वान् देवान् हविषा **वर्धयन्तीः**।
अषाढाᳵ कामम् **उपायन्तु** यज्ञम्॥

{विश्वेभ्यो देवेभ्यः स्वाहा ऽषाढाभ्यः स्वाहा।
अनपजय्याय स्वाहा जित्यै स्वाहा।}

(φ, ζ, tau and σ Sagittarii)

अभिजित्

यस्मिन् **ब्रह्माभ्यजयत्** सर्वम् एतत्।
अमुञ् च लोकम् इदम् ऊं च सर्वम्।
तन् नो नक्षत्रम् अभिजिद् **विजित्य**।
श्रियन् **दधात्व्** अहृणीयमानम्।

उभौ लोकौ ब्रह्मणा **सञ्जितेमौ**।
तन् नो नक्षत्रम् अभिजिद् **विचष्टाम्** (=विख्यापयतु)।
तस्मिन् वयम् पृतनास् **सञ्जयेम**।
तन् नो देवासो **अनुजानन्तु** कामम्॥

{ब्रह्मणे स्वाहा ऽभिजिते स्वाहा।
ब्रह्मलोकाय स्वाहा ऽभिजित्यै स्वाहा।}

(Vega)

श्रोणा / श्रवणम् - विष्णुः

**शृण्वन्ति** श्रोणाम् अमृतस्य गोपाम्।
पुण्याम् अस्या **उपशृणोमि** वाचम्।
महीन् देवीँ विष्णु-पत्नीम् अजूर्याम्(=अज्वराम्)।
प्रतीचीम् एनाꣳ हविषा **यजामः**।

त्रेधा विष्णुर् उरु-गायो(गेयो) **विचक्रमे**।
महीन् दिवम् पृथिवीम् अन्तरिक्षम्।
तच् **छ्रोणैति** (अत्र) श्रव(=कीर्तिम्) **इच्छमाना**।
पुण्यꣳ श्लोकयँ यजमानाय **कृण्वती**॥

{विष्णवे स्वाहा श्रोणायै स्वाहा।
श्लोकाय स्वाहा श्रुताय स्वाहा।}

(α, β and γ Aquilae)

धनिष्ठाः/ श्रविष्ठाः - वसवः

अष्टौ देवा वसवस् सोम्यासः।
चतस्रो देवीर् अजराः श्रविष्ठाः।
ते यज्ञम् **पान्तु** रजसᳶ पुरस्तात्।
सवँवत्सरीणम् अमृतꣳ स्वस्ति।

यज्ञन् नᳶ **पान्तु** वसवᳶ पुरस्तात्।
दक्षिणतो **ऽभियन्तु** श्रविष्ठाः।
पुण्यन् नक्षत्रम् **अभि सवँविशाम**।
मा नो अरातिर् अघशꣳसा **ऽगन्न्**॥

{वसुभ्यः स्वाहा श्रविष्ठाभ्यः स्वाहा।
अग्राय स्वाहा परीत्यै स्वाहा।}

(α to δ Delphini)

शतभिषग् - वरुणः

क्षत्रस्य राजा वरुणो ऽधिराजः।
नक्षत्राणाꣳ शतभिषग् वसिष्ठः।
तौ देवेभ्यᳵ **कृणुतो** दीर्घम् आयुः।
शतꣳ सहस्रा भेषजानि **धत्तः**।

यज्ञन् नो राजा वरुण **उपयातु**।
तन् नो विश्वे **अभि संयन्तु** देवाः।
तन् नो नक्षत्रꣳ शतभिषग् **जुषाणम्**।
दीर्घम् आयुᳶ **प्रति रद्**(=दद्यात्) भेषजानि॥

{वरुणाय स्वाहा शतभिषजे स्वाहा।
भेषजेभ्यः स्वाहा।}

(Sadachbia = γ Aquarii इति केचित्। Fomalhaut स्याद् इत्यन्ये।)

प्रोष्ठपदाः/ भाद्रपदाः पूर्वाः - अज एकपात्

अज एकपाद् **उदगात्** पुरस्तात्।
विश्वा भूतानि प्रति मोदमानः।
तस्य देवाᳶ प्रसवयँ **यन्ति** सर्वे।

प्रोष्ठपदासो अमृतस्य गोपाः।

---

विभ्राजमानस् समिधान उग्रः।
आ ऽन्तरिक्षम् **अरुहद् अगन्**(=प्राप्नोत्) द्याम्।
तꣳ सूर्यन् देवम् अजम् एकपादम्।
प्रोष्ठपदासो **अनुयन्ति** सर्वे॥

---

{अजायैकपदे स्वाहा प्रोष्ठपदेभ्यः स्वाहा।
तेजसे स्वाहा ब्रह्मवर्चसाय स्वाहा।}

---

(α and β Pegasi)

bce-3000 naxatra-chakra
bce-3000
naxatra-chakra

- धिष्णियाभिस् तार्क्ष्य-सम्बन्धो ऽन्यत्र प्रपश्चितः। सर्वम् एतद् अन्यत्र प्रपञ्चितम्।
- ३००० BCE इति काले ऽत्र परिसरे ऽवर्तत +अयनवर्तन-स्थानम्।

---

प्रोष्ठपदाः/ भाद्रपदाः उत्तराः - अहिर् बिध्नियः

---

अहिर् बुध्नियꣳ(=मूलस्थः) **प्रथमान एति**।
श्रेष्ठो देवानाम् उत मानुषाणाम्।
तम् ब्राह्मणास् सोमपास् सोम्यासः(=रमणीयदेहाः)।
प्रोष्ठपदासो **अभिरक्षन्ति** सर्वे।

---

चत्वार एकम् अभि कर्म देवाः।
प्रोष्ठपदास इति यान् **वदन्ति**।
ते बुध्नियम् परिषद्यꣳ **स्तुवन्तः**।
अहिꣳ **रक्षन्ति नमसोपसद्य**॥

---

{अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यः स्वाहा।}

---

(γ Pegasi and α Andromedae)

bce-3000 naxatra-chakra
bce-3000
naxatra-chakra

- यदा मृगशीर्षे बभूव विषुवस्थानम्, अत्रासीत् सौरं दक्षिणतमम् अयनम्। विश्व-स्कम्भमूलस्थो ऽहिर्बुध्नियः। स च प्रोष्ठपदास्व् अपि कल्पितः प्रायेण तेनैव कारणेन।
- धिष्णियाभिस् तार्क्ष्य-सम्बन्धो ऽन्यत्र प्रपश्चितः। सर्वम् एतद् अन्यत्र प्रपञ्चितम्।

---

रेवती - पूषा

---

पूषा रेवत्य् **अन्वेति** पन्थाम्।
पुष्टिपती पशुपा वाज(=अन्न)बस्त्यौ(बलौ)।
इमानि हव्या **प्रयता जुषाणा**।
सुगैर् नो यानैर् **उपयाताꣳ** यज्ञम्।

---

क्षुद्रान् पशून् **रक्षतु** रेवती नः।
गावो नो अश्वाꣳ **अन्वेतु** पूषा।
अन्नꣳ **रक्षन्तौ** बहुदा विरूपम्।
वाजꣳ(=अन्नम्) **सनुताꣳ**(=दत्ताम्) यजमानाय यज्ञम्॥

---

{पूष्णे स्वाहा रेवत्यै (=ζ Piscium) स्वाहा।
पशुभ्यः स्वाहा।}

---

(ζ Piscium)

---

अश्विनौ

---

तद् अश्विनाव् **अश्वयुजोपयाताम्**।
शुभङ् **गमिष्ठौ** सुयमेभिर् अश्वैः।
स्वन् नक्षत्रꣳ हविषा **यजन्तौ**।
मध्वा **सम्पृक्तौ** यजुषा **समक्तौ**।

---

यौ देवानाम् भिषजौ हव्यवाहौ।
विश्वस्य दूताव् अमृतस्य गोपौ।
तौ नक्षत्रञ् **जुजुषाणोपयाताम्**।
नमो ऽश्विभ्याङ् **कृणुमो** ऽश्वयुग्भ्याम्॥

---

{अश्विभ्याꣳ स्वाहाऽश्वयुग्भ्याꣳ स्वाहा।
श्रोत्राय स्वाहा श्रुत्यै स्वाहा।}

---

(β and α Arietis)

- “अश्विनौ व्यात्तम्” इत्युत्तरनारयणे। भरणीविषुवकाले। विवरणानि अत्र।
- पश्चाद् विशुवस्थानम् अत्र।

भरणी - यमः

अप पाप्मानम् भरणीर् (=35, 39, 41 Arietis) **भरन्तु**।
तद् यमो राजा भगवान् **विचष्टाम्**।
लोकस्य राजा महतो महान् हि।
सुगन् नः पन्थाम् अभयङ् **कृणोतु**।

यस्मिन् नक्षत्रे यम **एति** राजा।
यस्मिन्न् एनम् **अभ्यषिञ्चन्त** देवाः।
तद् अस्य चित्रꣳ हविषा **यजाम**।
अप पाप्मानम् भरणीर् **भरन्तु**॥

{यमाय स्वाहा ऽपभरणीभ्यस् स्वाहा ।
राज्याय स्वाहा ऽभिजित्यै स्वाहा ॥55॥}

(35, 39, and 41 Arietis)

अमावास्या

निवेशनी सङ्गमनी वसूनाꣳ,
विश्वा रूपाणि वसून्य् **आवेशयन्ती**।
सहस्रपोषꣳ सुभगा **रराणा**
सा न **आगन्** वर्चसा सꣳविदाना॥

यत् ते देवा **अदधुर्** भाग-धेयम्
अमावास्ये **सꣳवसन्तो** महित्वा।
सा नो यज्ञम् **पिपृहि**(←पालनपूरणयोः) विश्व-वारे(←वरणे?)
रयिन् नो **धेहि** सुभगे सुवीरम्॥

{अमावास्यायै स्वाहा कामाय स्वाहा गत्यै स्वाहा।}

चन्द्रमाः

नवोनवो **भवति** जायमानो
ऽह्नां केतुर् उषसाम् **एत्य्** अग्रम् (कृष्णपक्षे)।
भागं (सोमपाभ्यो) देवेभ्यो **वि दधात्य् आयन्**
प्र चन्द्रमास् **तिरते**(=वर्धयति) दीर्घम् आयुः ॥१९

यम् (सोमं) आदित्या अꣳशुम् **आप्याययन्ति**
यम् अक्षितम् अक्षितयः **पिबन्ति** ।
तेन नो राजा वरुणो बृहस्-पतिर्
**आ प्याययन्तु** भुवनस्य गोपाः ।

अहोरात्रे

ये विरूपे समनसा सꣳ व्ययन्ती ।
समानन्तन्तुम्परितातना तैः ।
विभू प्रभू अनुभू विश्वतो हुवे ।
ते नो नक्षत्रे हवमागमेतम् ।

वयन्देवी ब्रह्मणा सꣳविदानाः ।
सुरत्नासो देववीतिन्दधानाः ।
अहोरात्रे हविषा वर्धयन्तः ।
अति पाप्मानमति मुक्त्या गमेम ।

उषाः

प्रत्युवदृश्यायती ॥24॥
व्युच्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा ।

तमो ज्योतिष्कृणोति सूनरी ।
उदुस्रियाꣳस्सचते सूर्यः ।
सचा उद्यन्नक्षत्रमर्चिमत् ।
तवेदुषो व्युषि सूर्यस्य च ।

नक्षत्रम्

सम्भक्तेन गमेमहि ।
तन्नो नक्षत्रमर्चिमत् ।
भानुमत्तेज उच्चरत् ।
उपयज्ञमिहागमत् ॥25॥

प्र नक्षत्राय देवाय ।
इन्द्रायेन्दुꣳ हवामहे ।
सनस्सविता सुवथ्सनिम् ।
पुष्टिदाꣳ वीरवत्तमम् ।

उदु त्यं **जातवेदसं**
देवं **वहन्ति केतवः**(→रश्मयः) ।
दृशे विश्वाय सूर्यम् ॥

सूर्यः

चित्रं देवानाम् **उदगाद्** अनीकं
चक्षुर् मित्रस्य वरुणस्याग्नेः ।
**आ-प्रा**(←पूरणे) द्यावा-पृथिवी अन्तरिक्षं
**सूर्य** आत्मा जगतस् तस्थुषश् च ॥

अदितिः

अदितिर् न उरुष्यत्व्
अदितिश् शर्म यच्छतु ।
अदितिः पात्व् अꣳहसः ॥

महीम् ऊ षु मातरꣳ सुव्रतानाम्
ऋतस्य पत्नीम् अवसे **हुवेम** ।
तुवि(=प्रवृद्ध)-क्षत्राम् अजरन्तीम् उरूचीꣳ(=उरुगमनां) सुशर्माणम्
अदितिꣳ(=अखण्डनीयां) सुप्रणीतिम् ॥

विष्णुः

इदꣳ विष्णुर् (अग्नि-विद्युत्-सूर्यात्मना) **वि चक्रमे**
(पृथिव्याम् अन्तरिक्षे दिवि च) त्रेधा **नि दधे** पदम् ।
(तैर् आधारैर् जगत्) **सम् ऊढम्** अस्य पाꣳसुरे (ले इति साम्नि, पांसुमति [पादे]) ॥

प्र तद् विष्णुः **स्तवते**(=स्तूयते) वीर्येण
मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्व्
**अधिक्षियन्ति** भुवनानि विश्वा ॥

अग्निः

अग्निर् मूर्धा दिवः ककुत्
पतिः पृथिव्या अयम् ।
अपां **रेतांसि जिन्वति**(=प्रीणयति) ॥

भुवो **यज्ञस्य**, (विद्युद्-रूपेण) रजसश्(→अन्तरिक्षस्य) च **नेता**
यत्रा **नियुद्भिस्**(=मरुद्-अश्वैस्) **सचसे**(संयासि) शिवाभिः ।
(सूर्यरूपेण) दिवि **मूर्धानन् दधिषे** सुवर्षाञ्
**जिह्वाम्** अग्ने **चकृषे** हव्यवाहम् ॥

अनुमतिः

**अनु** नोऽद्यानुमतिर् (=ऊनचन्द्रा पौर्णमासी)
यज्ञन् देवेषु **मन्यताम्** ।
अग्निश् च हव्यवाहनो,
**भवतान्** दाशुषे मयः ।

**अन्व्** इद् अनुमते त्वम् [34]
**मन्यासै** शञ्च नx **कृधि** ।
क्रत्वे दख्षाय नो **हिनु**(=प्रेरय)
प्र ण आयूꣳषि **तारिषः** ।

संयाज्ये

हव्यवाहमभिमातिषाहम् ।
रख्षोहणम्पृतनासु जिष्णुम् ।
ज्योतिष्मन्तन्दीद्यतम्पुरन्धिम् ।
अग्निꣴ स्विष्टकृतमा हुवेम ।

स्विष्टमग्ने अभि तत्पृणाहि ।
विश्वा देव पृतना अभिष्य ।
उरुन्नꣳ पन्थाम्प्रदिशन्विभाहि ।
ज्योतिष्मद्धेह्यजरन्न आयुः ।

व्याहृतित्रयं

कृत्तिकाः - अग्निः

अग्नये स्वाहा । कृत्तिकाभ्यस्स्वाहा ।
अम्बायै स्वाहा ।
दुलायै स्वाहा ।
नितत्न्यै स्वाहा ।
अभ्रयन्त्यै स्वाहा ।
मेघयन्त्यै स्वाहा ।
वर्षयन्त्यै स्वाहा । चुपुणीकायै स्वाहा

रोहिणी - प्रजापतिः

प्रजापतये स्वाहा रोहिण्यै स्वाहा । रोचमानायै स्वाहा प्रजाभ्यस्
स्वाहा ॥28॥

मृगशीर्षम् - सोमः

सोमाय स्वाहा मृगशीर्षाय स्वाहा ,
इन्वकाभ्यस् स्वाहौषधीभ्यस् स्वाहा ,
राज्याय स्वाहा ऽभिजित्यै स्वाहा ॥29॥

आर्द्रा - रुद्रः

रुद्राय स्वाहा ऽर्द्रायै स्वाहा , पिन्वमानायै स्वाहा पशुभ्यस्स्वाहा ॥
30॥

पुनर्वसू - अदितिः

अदित्यै स्वाहा पुनर्वसुभ्यां स्वाहा,
भूत्यै स्वाहा प्रजात्यै स्वाहा ॥31॥

तिष्यम् / पुष्यम् - बृहस्पतिः

बृहस्पतये स्वाहा तिष्याय स्वाहा । ब्रह्मवर्चसाय स्वाहा ॥32॥

आश्रेषाः - सर्पाः

सर्पेभ्यस् स्वाहा ऽऽश्रेषाभ्यस् स्वाहा ।
दन्दशूकेभ्यस् स्वाहा ॥33॥

मघाः - पितरः

पितृभ्यस् स्वाहा मघाभ्यस् स्वाहा
ऽनघाभ्यस् स्वाहागदाभ्यस् स्वाहा
ऽरुन्धतीभ्यस् स्वाहा ॥34॥

पूर्व-फल्गुन्यः - अर्यमा

अर्यम्णे स्वाहा फल्गुनीभ्याꣳ स्वाहा ,
पशुभ्यस् स्वाहा ॥35॥

उत्तर-फल्गुन्यः - भगः

भगाय स्वाहा फल्गुनीभ्याꣳ स्वाहा । श्रैष्ठ्याय स्वाहा ॥36॥

हस्तः - सविता

सवित्रे स्वाहा हस्ताय स्वाहा
ददते स्वाहा पृणते स्वाहा
प्रयच्छते स्वाहा प्रतिगृभ्णते स्वाहा ॥37 ॥

चित्रा - त्वष्टा

त्वष्ट्रे स्वाहा चित्रायै स्वाहा ।
चैत्राय स्वाहा प्रजायै स्वाहा ॥38॥

निष्ट्या, स्वातिः - वायुः

वायवे स्वाहा निष्ट्यायै स्वाहा ।
कामचाराय स्वाहा
ऽभिजित्यै स्वाहा ॥39॥

विशाखे - इन्द्राग्नी

इन्द्राग्निभ्याꣳ स्वाहा विशाखाभ्याꣳ स्वाहा ।
श्रैष्ठ्याय स्वाहा ऽभिजित्यै स्वाहा ॥40॥

पूर्णिमा

पौर्णमास्यै स्वाहा कामाय स्वाहा ऽऽगत्यै स्वाहा ॥41॥

अनूराधाः - मित्रः

मित्राय स्वाहा ऽनूराधेभ्यस् स्वाहा ।
मित्रधेयाय स्वाहा ऽभिजित्यै स्वाहा ॥42॥

ज्येष्ठा - इन्द्रः

इन्द्राय स्वाहा ज्येष्ठायै स्वाहा ।
ज्यैष्ठ्याय स्वाहा ऽभिजित्यै स्वाहा ॥43॥

मूलम् - निर्ऋतिः

प्रजापतये स्वाहा मूलाय स्वाहा । प्रजायै स्वाहा ॥44॥

अषाढाः पूर्वाः - आपः

अ॒द्भ्यस् स्वाहा॑ ऽषा॒ढाभ्य॒स् स्वाहा॑ ।
स॒मु॒द्राय॒ स्वाहा॒ कामा॑य॒ स्वाहा॑ ।
अ॒भिजि॑त्यै॒ स्वाहा॑ ॥45॥

अषाढाः उत्तराः - विश्वे देवाः

विश्वे॑भ्यो दे॒वेभ्य॒स् स्वाहा॑ ऽषा॒ढाभ्य॒स् स्वाहा॑ । अ॒न॒प॒ज॒य्याय॒ स्वाहा॒ जित्यै॒ स्वाहा॑ ॥46॥

अभिजित्

ब्रह्म॑णे॒ स्वाहा॑ ऽभिजि॒ते स्वाहा॑ । ब्र॒ह्म॒लो॒काय॒ स्वाहा॒ ऽभिजि॑त्यै॒ स्वाहा॑ ॥47॥

श्रोणा / श्रवणम् - विष्णुः

विष्ण॑वे॒ स्वाहा॑ श्रो॒णायै॒ स्वाहा॑ ।
श्लोका॑य॒ स्वाहा॑ श्रु॒ताय॒ स्वाहा॑ ॥48॥

धनिष्ठाः/ श्रविष्ठाः - वसवः

वसु॑भ्य॒स् स्वाहा॒ श्रवि॑ष्ठाभ्य॒स् स्वाहा॑ ।
अग्रा॑य॒ स्वाहा॒ परी॑त्यै॒ स्वाहा॑ ॥49॥

शतभिषग् - वरुणः

वरु॑णाय॒ स्वाहा॑ श॒तभि॑षजे॒ स्वाहा॑ । भे॒ष॒जेभ्य॒स् स्वाहा॑ ॥50॥

प्रोष्ठपदाः/ भाद्रपदाः पूर्वाः - अज एकपात्

अ॒जायैक॑पदे॒ स्वाहा॑ प्रोष्ठप॒देभ्य॒स् स्वाहा॑ ।
तेज॑से॒ स्वाहा॑ ब्रह्मवर्च॒साय॒ स्वाहा॑ ॥51॥

प्रोष्ठपदाः/ भाद्रपदाः उत्तराः - अहिर् बिध्नियः

अहि॑ये बु॒ध्नियाय॒ स्वाहा॑
प्रोष्ठप॒देभ्य॒स् स्वाहा॑ । प्र॒ति॒ष्ठायै॒ स्वाहा॑ ॥52॥

रेवती - पूषा

पू॒ष्णे स्वाहा॑ रे॒वत्यै॒ स्वाहा॑ । प॒शुभ्य॒स् स्वाहा॑ ॥53॥

अ॒श्विभ्या॒ꣳ स्वाहा॑ ऽश्वयु॒ग्भ्या॒ꣳ स्वाहा॑ ।
श्रोत्रा॑य॒ स्वाहा॒ श्रु॒त्यै॒ स्वाहा॑ ॥54॥

भरणी - यमः

य॒माय॒ स्वाहा॑ ऽपभर॑णीभ्य॒स् स्वाहा॑ ।
रा॒ज्याय॒ स्वाहा॒ ऽभिजि॑त्यै॒ स्वाहा॑ ॥55॥

अमावास्या

अ॒मा॒वा॒स्या॑यै॒ स्वाहा॒ कामा॑य॒ स्वाहा ऽऽग॑त्यै॒ स्वाहा॑ ॥56॥

---

(pegasus-प्रोष्ठपदासु) द॒धि-क्राव्णो॑ **अका॒रि॒षं**
जि॒ष्णोर् अश्व॑स्य वा॒जिनः॑ ।
**सु॒र॒भि** नो॒ मुखा॑ **क॒र॒त्**
प्र ण॒ **आयूँ॑षि तारिषत्** ।

---

आपो॒ हि ष्ठा म॑योभुव॑स्
ता न॑ ऊ॒र्जे(जाः) द॑धातन ।
म॒हे रणा॑य॒(=रमणीयाय) चक्ष॑से(=दर्शनाय) ॥

यो वः॑ शि॒वत॑मो॒ रस॒स्
तस्य॑ भाजयते॒ह नः॑ ।
उ॒श॒तीर्(=कामयमाना) इ॑व मा॒तरः॑ ॥

(रसाय) तस्मा॒ अर॑(=शीघ्रम्) गमाम वो
यस्य॒ (प्रभावेण) क्षया॑य॒(=निवासाय) जिन्व॑थ(=प्रीणयथ) ।
आपो॑ (प्रजा) ज॒नय॑था च नः ॥

---

'उदुत्तमं वरुण', 'अस्तभ्नाद् द्यां', 'यत्किञ्चेदं', 'कितवासो', 'अवते हेडः,' 'तत्त्वायामि' इति वरुण-सूक्तं

---

उदु॑त्त॒मं व॑रुण॒ पाश॑म् अ॒स्मद्
अवा॑ध॒मं वि म॑ध्य॒मं **श्र॑थाय** ।
अथा॑ व॒यम् आ॑दित्य व्र॒ते तवा
+ऽना॑गसो॒ अदि॑तये **स्याम** ॥३॥

---

**अस्त॑भ्ना॒द्** द्याम् ऋ॑ष॒भो(=वर्षिता) अ॒न्तरि॑क्ष॒म्
**अमि॑मीत** वरि॒माण॑म्(=उरुत्वम्) पृथि॒व्याः (सूर्यग्रहणेन?)।
**आसी॑दद्** विश्वा॒ भुव॑नानि स॒म्राड्(=सङ्गतदीप्तिः [सोमः])
विश्वेत् तानि॒ वरु॑णस्य(=वारकस्य) व्र॒तानि॑॥

---

यत् किं चे॒दं व॑रुण॒ दैव्ये॒(←देव+यज्ञ) जने॑(देवेषु),
ऽभिद्रो॒हं म॑नु॒ष्या॑श् च॒रा॑मसि।
अचि॑त्ती॒ यत् तव॒ धर्मा॑ यु॒योपि॒म(विनाशयामः),
मा न॒स् तस्मा॒द् एन॑सो देव रीरिषः ॥

---

(ऋत्विजः) कि॒त॒वासो॒ यद् रि॑रि॒पुर्(=लिलिपुः) न दी॒वि(देवकर्मणि),
यद् वा॑ ऽघा स॒त्यम् उ॒त यन् न वि॒द्म ।
सर्वा॒ ता विष्य॑(=विनाशय) शिथि॒रेव॑(=शिथिला +इव)
दे॒वाथा॑ ते स्याम वरुण प्रि॒यासः॑ ॥

---

अव॑ ते॒ **हेळो॑**(←हेड् अवज्ञायां) वरुण॒ नमो॑भि॒र्
**अव॑** य॒ज्ञेभि॑र् **ईमहे**(→नयामः) ह॒विर्भिः॑ ।
**क्षय॑न्न्**(=निवसन्) अ॒स्मभ्य॑म् अ॒सुर प्रचेता॒
राज॒न् **एना॑सि शिश्रथः**(=शिथिलीकुरु) कृ॒तानि॑ ॥

---

तत् त्वा॑ **या॒मि** ब्रह्म॑णा॒ **वन्द॑मान॒स्**
तद् **आ शा॑स्ते॒** यज॑मानो ह॒विर्भिः॑ ।
अहे॑ळमानो (=अक्रुध्यन्) वरु॒णेह **बो॒ध्य्** उरु॑शं॒स
मा न॒ आयुः॒ **प्र मो॑षीः** ॥

---

हिर॑ण्यवर्णा॒श् शुच॑यः पाव॒का,
यासु॑ जा॒तx क॒श्यपो, यास्विन्द्रः॑ ।
अ॒ग्निँ॑ या गर्भ॑न् दधि॒रे, विरू॑पास् -
ता न॒ आप॒शꣳ स्यो॒ना भ॑वन्तु ।

---

यासा॒ꣳ राजा॒ वरु॑णो॒ याति॒ मध्ये॑,
स॒त्या॒नृ॒ते अ॑व॒पश्य॑ञ् जना॑नाम् । म॒धु॒श्चुत॒श् शुच॑यो॒ या पा॑व॒कास् -
ता न॒ आप॒श् शꣳ स्यो॒ना भ॑वन्तु ।

---

यासा॑न् दे॒वा दि॒वि कृ॒ण्वन्ति॑ भ॒क्ष्यँ॑ -
या अ॒न्तरि॑क्षे बहु॒धा भव॑न्ति । या पृ॑थि॒वीम् पय॑सो॒न्दन्ति॑ शु॒क्रास् -
ता न॒ आप॒श् शꣳ स्यो॒ना भ॑वन्तु ।

यद् अ॒दस् स॑म्प्र॒य॒तीर्
अहा॑व॒(→मेघे, serpens) **अन॑दता** ह॒ते (ज्येष्ठ-स्थ+इन्द्रेण)।
तस्मा॒द् आ न॒द्यो॑ (→द्युनद्य् अपि) नाम॑ **स्थ,**
ता वो॒ नामा॑नि सिन्धवः(=स्यन्दनशीलाः) ।(4)

यत् **प्रेषि॑ता॒** वरु॑णेन,
ताश् शीभ॑ꣳ(=शिवं) **स॒मव॑ल्गत**(=अनृत्यत) । [2]
तद् (द्युगङ्गेति, मेघरूपेण वा) **आ॑प्नो॒द्** (ज्येष्ठास्थ) इन्द्रो॑ वो य॒तीस् -
तस्मा॒द् आपो॒ अनु॒ **स्थन** ।

अ॒प॒का॒म॒ꣳ **स्यन्द॑माना॒**
**अवी॑वरत**(←वृ) वो॒ हिक॑म्(=हि) ।
इन्द्रो॑ व॒श् शक्ति॑भिर् देवी॒स् -
तस्मा॒द् वार्॒(=वारि) णाम॑ वो **हि॒तम्** ।

एको॑ दे॒वो अप्य् **अ॑तिष्ठ॒त्** -
**स्यन्द॑माना** यथा-व॒शम् ।
**उदा॑निषुर्**(←उदान=उच्छ्वास) म॒हीर् इति॒,
तस्मा॑द् उ॒द॒कम् **उ॑च्यते** ।

आपो॑ भ॒द्रा, घृ॒तम् इद् आप॑ आसुर् -
अ॒ग्नीषोमौ॑ **बिभ्र॒त्य्,** आप॒ इत् ताः ।
ती॒व्रो रसो॑ मधु-पृचा॑म् अ॒रङ्-ग॒म (→रसः)
**आ** मा॑ प्रा॒णेन॑ स॒ह वर्च॑सा **गन्न्** ।

आद्(=अतः) इत् **प॑श्याम्य्** उ॒त वा॑ **शृणो॒म्य्**
आ मा॒ घोषो॑ **गच्छ॒ति** वाङ् न॑ आसाम् ।
**मन्ये॑** भेजा॒नो(←भज्) अ॒मृत॑स्य॒ तर्हि॒
हिर॑ण्य-वर्णा॒ **अतृ॑पयँ॒** य॒दा वः॑ ।

आपो॒ हि ष्ठा म॑यो॒भुव॑स्
ता न॑ ऊ॒र्जे(जाः) द॑धातन ।
म॒हे रणा॑य(=रमणीयाय) चक्ष॑से(=दर्शनाय) ॥

यो वः॑ शि॒वत॑मो॒ रस॑स्
तस्य॑ भाजयते॒ह नः॑ ।
उ॒श॒तीर्(=कामयमाना) इ॑व मा॒तरः॑ ॥

(रसाय) तस्मा॒ अरं॑(=शीघ्रम्) गमाम वो
यस्य॒ (प्रभावेण) क्षया॑य(=निवासाय) जिन्व॑थ(=प्रीणयथ) ।
आपो॑ (प्रजा) ज॒नय॑था च नः ॥

शि॒वेन॑ मा॒ चक्षु॑षा पश्यतापश् -
शि॒वया॑ त॒नुवोप॑ स्पृशत॒ त्वच॑म् मे । सर्वा॑ꣳ अ॒ग्नीꣳर् अ॑प्सु-ष॒दो॑ हुवे वो॒,
मयि॒ वर्चो॒ बलम् ओजो॒ नि ध॑त्त ।

यद् अ॒दस् स॑म्प्र॒य॒तीर्
अहा॑व॒(→मेघे, serpens) **अन॑दता** ह॒ते (ज्येष्ठ-स्थ+इन्द्रेण)।
तस्मा॒द् आ न॒द्यो॑ (→द्युनद्य् अपि) नाम॑ **स्थ,**
ता वो॒ नामा॑नि सिन्धवः(=स्यन्दनशीलाः) ।(4)

यत् **प्रेषि॑ता॒** वरु॑णेन,
ताश् शीभ॑ꣳ(=शिवं) **स॒मव॑ल्गत**(=अनृत्यत) । [2]
तद् (द्युगङ्गेति, मेघरूपेण वा) **आ॑प्नो॒द्** (ज्येष्ठास्थ) इन्द्रो॑ वो य॒तीस् -
तस्मा॒द् आपो॒ अनु॒ **स्थन** ।

अ॒प॒का॒म॒ꣳ **स्यन्द॑माना॒**
**अवी॑वरत**(←वृ) वो॒ हिक॑म्(=हि) ।
इन्द्रो॑ व॒श् शक्ति॑भिर् देवी॒स् -
तस्मा॒द् वार्॒(=वारि) णाम॑ वो **हि॒तम्** ।

एको॑ दे॒वो अप्य् **अ॑तिष्ठ॒त्** -
**स्यन्द॑माना** यथा-व॒शम् ।
**उदा॑निषुर्**(←उदान=उच्छ्वास) म॒हीर् इति॒,
तस्मा॑द् उ॒द॒कम् **उ॑च्यते** ।

आपो॑ भ॒द्रा, घृ॒तम् इद् आप॑ आसुर् -
अ॒ग्नीषोमौ॑ **बिभ्र॒त्य्,** आप॒ इत् ताः ।
ती॒व्रो रसो॑ मधु-पृचा॑म् अ॒रङ्-ग॒म (→रसः)
**आ** मा॑ प्रा॒णेन॑ स॒ह वर्च॑सा **गन्न्** ।

आद्(=अतः) इत् **प॑श्याम्य्** उ॒त वा॑ **शृणो॒म्य्**
आ मा॒ घोषो॑ **गच्छ॒ति** वाङ् न॑ आसाम् ।
**मन्ये॑** भेजा॒नो(←भज्) अ॒मृत॑स्य॒ तर्हि॒
हिर॑ण्य-वर्णा॒ **अतृ॑पयँ॒** य॒दा वः॑ ।

आपो॒ हि ष्ठा म॑यो॒भुव॑स्
ता न॑ ऊ॒र्जे(जाः) द॑धातन ।
म॒हे रणा॑य(=रमणीयाय) चक्ष॑से(=दर्शनाय) ॥

यो वः॑ शि॒वत॑मो॒ रस॑स्
तस्य॑ भाजयते॒ह नः॑ ।
उ॒श॒तीर्(=कामयमाना) इ॑व मा॒तरः॑ ॥

(रसाय) तस्मा॒ अरं॑(=शीघ्रम्) गमाम वो
यस्य॒ (प्रभावेण) क्षया॑य(=निवासाय) जिन्व॑थ(=प्रीणयथ) ।
आपो॑ (प्रजा) ज॒नय॑था च नः ॥

पव॑मानस् **सुव॒र्-जनः॑** ।
प॒वित्रे॑ण (नाना-विषयेषु) विच॑र्षणिः ।
यꣳ पोता॒ स पु॑नातु मा ।

पु॒नन्तु॑ मा **देवज॒नाः** ।
पु॒नन्तु॒ **मन॑वो** धि॒या ।
पु॒नन्तु॒ **विश्व॑ आ॒यवः॑**(=मनुष्याः) ।

जात॑वेदꣳ प॒वित्र॑वत् ।
प॒वित्रे॑ण पुनाहि(=पुनीहि) मा ।
शु॒क्रेण॑ देव॒ दीद्य॑त् ।
**अग्ने** क्रत्वा॒(=प्रज्ञया) क्रतू॒ꣳर् अनु॑ ॥46॥

यत् ते **पवित्रम् अर्चिषि** ।
अग्ने वितंतम् अन्तरा ।
ब्रह्म तेन पुनीमहे ।

उभाभ्यां देव **सवितः** ।
पवित्रेण सवेन च ।
इदम् ब्रह्म पुनीमहे ।(5)

**वैश्वदेवी** पुनती देव्य् आगात्(=आगच्छत्) ।
यस्यै बह्वीस् तनुवो वीत-पृष्ठाः(=कान्त-स्तुतयः) ।
तया मदन्तस् सध-माद्येषु (=सह माद्यन्ति येषु सवनेषु) ।
वयꣳ स्याम पतयो रयीणाम् ॥47॥

**वैश्वानरो** रश्मिभिर् मा पुनातु ।
**वात**ꣳ प्राणेनेषिरो(←इष गतौ) मयोभूः ।
**द्यावापृथिवी** पयसा पयोभिः (इति क्रमशः) ।
ऋतावरी(=ऋतवत्यौ) यज्ञिये मा पुनीताम् ।

बृहद्भिस् **सवितस्** तृभिः(=त्रिभिः [लोकगणनया]/ तृप्यतेः करणे क्विप्) ।
वर्षिष्ठैर्(=प्रवृद्ध-धर्मैः) देव मन्मभिः(=मननीयैः) ।
अग्ने दक्षैꣳ पुनाहि मा ।

येन देवा अपुनत ।
येनापो दिव्यङ् कशः(←कशेर् गतिकर्मणो ऽसुन्) ।
तेन **दिव्येन ब्रह्मणा** ॥48॥
इदम् ब्रह्म पुनीमहे ।

यꣳ पावमानीर् अध्येति ।
**ऋषिभिस् सम्भृत**ꣳ रसम् ।
सर्वꣳ स पूतम् अश्नाति ।
स्वदितम्(=स्वादुकृतं) **मातरिश्वना**(=वायुना) ।

पावमानीर् यो अध्येति ।
ऋषिभिस् सम्भृतꣳ रसम् ।
तस्मै सरस्वती दुहे ।
क्षीरꣳ सर्पिर् मधूदकम् ।

पावमानीस् स्वस्त्ययनीः ॥49॥
सुदुघा हि पयस्वतीः ।
ऋषिभिस् सम्भृतो रसः ।
ब्राह्मणेष्व् अमृतꣳ हितम् ।

पावमानीर् दिशन्तु नः ।
इमँल् लोकम् अथो अमुम् ।
कामान्थ् समर्धयन्तु नः ।
देवीर् देवैस् समाभृताः ।

पावमानीस् स्वस्त्ययनीः ।
सुदुघा हि घृतश्-चुतः(=क्षारयित्र्यः) ।
ऋषिभिस् सम्भृतो रसः ॥50॥
ब्राह्मणेष्व् अमृतꣳ हितम् ।

येन देवाꣳ पवित्रेण ।
आत्मानम् पुनते सदा ।
तेन सहस्रधारेण ।
पावमान्यꣳ पुनन्तु मा ।

प्राजापत्यम् पवित्रम् ।
शतोद्यामꣳ हिरण्मयम् ।
तेन ब्रह्म-विदो वयम् ।
पूतम् (यथा तथा स्वीयम्) ब्रह्म पुनीमहे ।

**इन्द्रस्** सुनीती(त्या) सह मा पुनातु ।
**सोमस्** स्वस्त्या **वरुणस्** समीच्या(=सम्यगश्चनया) ।
**यमो** राजा प्रमृणाभिꣳ(=प्रमारिकाभिः) पुनातु मा ।
**जातवेदा** मा+ऊर्जयन्त्या पुनातु ॥51॥

(फलं) तच् छंयोर् (बार्हस्पत्याद्) **आवृणीमहे** -
(देवान् प्रति) गातुं (=गमनं [हविषाम्]) - यज्ञाय,
गातुं(=गमनम्) यज्ञपतये ।

दैवी स्वस्तिरस्तु नः ।
स्वस्तिर् मानुषेभ्यः ।

ऊर्ध्वञ् जिगातु(=गच्छतु) भेषजम् ।
शन् नो अस्तु द्विपदे ।
शञ् चतुष्पदे ॥25॥

ॐ शान्तिश्शान्तिश्शान्तिः ।

च जपित्वा,

(मृगशिरसि यथा दृश्यते)
यो ब्रह्मा **ब्रह्मण उज्जहार**
प्राणैः **शिरः** कृत्तिवासाः पिनाकी (आर्द्रा-स्थः)।
ईशानो देवः स न आयुर् **दधातु**
तस्मै **जुहोमि** हविषा घृतेन ॥ १ ॥

(आर्द्रा-रूपेण) **विभ्राजमानः** सरिरस्य(=सलिलस्य [आकाशगङ्गायाः]) मध्याद्
रोचमानो घर्मरुचिर् य **आगात्** ।
स मृत्यु-पाशान् **अपनुद्य** घोरान्
इहायुषेणो घृतम् **अत्तु** देवः ॥ २ ॥

ब्रह्म-ज्योतिर् ब्रह्म-पत्नीषु गर्भं
यम् **आदधात्** पुरु-रूपं **जयन्तम्** ।
सुवर्ण-रम्भ-ग्रहम् अर्कम् **अर्च्यं**
तम् आयुषे **वर्धयामो** घृतेन ॥ ३ ॥

श्रियं लक्ष्मीम् औबलाम् अम्बिकां गां
षष्ठीं च याम् इन्द्र-सेनेत्य् **उदाहुः** ।
तां विद्यां ब्रह्म-योनिꣳ सरूपाम्
इहायुषे **तर्पयामो** घृतेन ॥ ४ ॥

दाक्षायण्यः सर्व-योन्यः स-योन्यः
सहस्रशो विश्वरूपा विरूपाः ।
स-सूनवः स-पतयः स-यूथ्या
आयुषेणो घृतम् इदं **जुषन्ताम्** ॥ ५ ॥

---

दिव्या गणा बहु-रूपाः पुराणा
आयुश्-छिदो नः **प्रमथ्नन्तु** वीरान् ।
तेभ्यो **जुहोमि** बहुधा घृतेन
**मा** नः प्रजाँ **रीरिषो** मोत वीरान् ॥ ६ ॥

---

एकः पुरस्तात् य इदं **बभूव**
यतो **बभूव** भुवनस्य गोपाः ।
यम् अप्य् **एति** भुवनँ साम्पराये
स नो हविर् घृतम् इहायुषे **ऽस्तु** देवः ॥ ७ ॥

---

वसून् रुद्रान् आदित्यान् मरुतोऽथ साध्यान्
ऋभून् यक्षान् गन्धर्वाँश् च पितॄँश् च विश्वान् ।
भृगून् सर्पाँश् चाङ्गिरसोऽथ सर्वान्
घृतँ **हुत्वा** स्वायुष्या **महयाम** शश्वत् ॥ ८ ॥

---

अयम् प्रायश्चित्तपाठः श्रीनिवस-देशिकेन सूचितः।

---

आ॒भिर् गी॒र्भिर् यद् अतो॑ न **ऊ॒नम्**
**आप्या॑यय** हरिवो॒ (=अश्ववान्, स्वर्णवान् वा [इन्द्रः]) **वर्द्ध॑मानः**।
य॒दा स्तो॒तृभ्यो॒ महि॑ गो॒त्रा (=मेघान्) **रु॒जासि॑** (=भिनक्षि)
**भूयिष्ठ॒भाजो॒** अध॑(=अत) ते **स्याम**॥

---

इति परिधानीयां त्रिः जपित्वा

(पच्छो ऽर्धर्क्शः पूर्णम् इति
+उत्तरोत्तरस्वरैः जप्यमानं श्रूयते)

---

(ॐ)
नमो॒ ब्रह्म॑णे॒(=वेदाय), नमो॑ अस्त्व॒ग्नये॒
नम॑ः पृथि॒व्यै, नम॒ ओष॑धीभ्यः ।
नमो॑ वा॒चे, नमो॑ वा॒चस्पत॑ये॒,
नमो॒ विष्ण॑वे बृह॒ते क॑रोमि ॥

(शतुरनुमो नद्यजादी ⇒ बृहन्महतोरुपसंख्यानम्। (वा॰) इति॑ बृहच्छ॒ब्दाद् अ॒नुमोऽजा॑दि॒र् विभ॑क्ति॒र् असं॑र्वनामस्थानम् उ॒दात्ता॑ भवति।)

ॐ शान्ति॒ः शान्ति॒ः शान्ति॒ः ॥

---

## ०४ प्रोक्षणम् ...{Loading}...

प्रणवेन कुम्भम् उत्थाप्य
'देवस्य' इत्यादि,

---

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे ।
अ॒श्विनो᳚र्बा॒हुभ्या᳚म् ।
पू॒ष्णो हस्ता᳚भ्याम् ।
अ॒श्विनो॒र्भैष॑ज्येन ।
तेज॑से ब्रह्मवर्च॒साया॒भिषि॑ञ्चामि ।

---

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे ।
अ॒श्विनो᳚र्बा॒हुभ्या᳚म् ।
पू॒ष्णो हस्ता᳚भ्याम् ।
सर॑स्वत्यै॒ भैष॑ज्येन ॥21॥
वी॒र्या॑या॒न्नाद्या॑या॒भिषि॑ञ्चामि ।

---

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे ।
अ॒श्विनो᳚र्बा॒हुभ्या᳚म् ।
पू॒ष्णो हस्ता᳚भ्याम् ।
इन्द्र॑स्येन्द्रि॒येण॑ ।
श्रि॒यै यश॑से॒ बला॑या॒भिषि॑ञ्चामि ।

---

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे᳚(=अनुज्ञायां), ऽश्विनो᳚र् बा॒हुभ्या᳚म्, पू॒ष्णो हस्ता᳚भ्याम्...

---

सर॑स्वत्यै वा॒चो
य॒न्तुर् य॒न्त्रेण अग्नेस् त्वा॒ साम्रा᳚ज्येना॒भिषि॑ञ्चामि ।

---

इन्द्र॑स्य॒ साम्रा᳚ज्येना॒भिषि॑ञ्चामि ॥
बृह॒स्पते᳚स् त्वा॒ साम्रा᳚ज्येना॒भिषि॑ञ्चामि ॥

---

व्याहृतिभिश्च यजमानं प्रोक्षयेत् ।

---

## ०५ दक्षिणादानादि ...{Loading}...

अथ यजमानः
पुरस्ताद् उपविशते हिरण्यं,
दक्षिणत उपविशते रजतं,
पश्चाद् उपविशते कांस्यम्
उत्तरत उपविशते वासश् च
दक्षिणां **दत्वा**
कुम्भजलेन **स्नायात्** ॥

॥ इति प्रयोगचन्द्रिकायां द्वितीयः खण्डः ॥

---